निखिलकर्मानुष्ठानोपयोगिमन्त्रणां

सङ्ग्रहात्मकः

# मन्त्रसङ्ग्रहः

निखिलकर्मानुष्ठानोपयोगिमन्त्राणां सङ्ग्रहात्मकः

# मन्त्रसङ्ग्रहः

प्रकाशकः :

**श्री के. हरिदास उपाध्यायः**

*निवृत्तप्रांशुपालः*

एस्. एम्. एस्. पि. संस्कृतमहाविद्यालयः

उडुपि



वृषसंवत्सरे कार्तिकशुद्धद्वादशी

शा. शकः १९२३

# MANTRA SANGRAHAH

( A Collection of Vedic Mantras used in ritual practices)


| | |
|---|---|
| First Edition | 1985, Copies 1000 |
| Second Edition | 2001, Copies 1000 |
| Third Edition | 2013, Copies 1000 |
| Fourth Edition | 2019, Copies 1000 |





Published by : **Sri K. Haridasa Upadhyaya**
Retd. Principal, S.M.S.P. Sanskrit College
Udupi

DTP by : **Navadurga Lasertech**
C/o. Dr. K. Padmanabha Kekunnaya
Udupi -2 (ph. : 31159)

Printed at : **Suguna Printer**
Sri Puthige Matha
Carstreet, Udupi - 576101
Ph: 0820-2531300

Price **Rs. 200/-**

# प्रास्ताविकम्
## (प्रथममुद्रणम्)

*आचार्यमध्वस्य विहारभूमौ श्रीकृष्णस्याधिष्ठाने रूप्यपीठपुरे अष्टमठाधीशैः संस्थापिता श्रीमन्मध्वसिद्धान्तप्रबोधिनी संस्कृतमहापाठशाला राज्यप्रशासनस्य संस्कृताभिमानिनां च सहकारेण समुन्नतिपथे पदमर्पयतीति महदिदं भागधेयमस्माकम्। शतकस्यास्यारम्भे (१९०४) लब्धजन्मेयं शाला रत्नोत्सवं समाप्य शतमानोत्सवं प्रतीक्षते इति साभिमानं वदामः। शालाया अस्या निरन्तराभिवृद्धौ शतशो महोदयाः भगीरथ प्रयत्नमेव अकुर्वन्निति सादरं संस्मरामः। तन्मध्ये वर्षषोडशके (1968-1974) प्राचार्यधुरं स्वीकृत्य शालामिमां समग्रताभिमुखीं प्रवर्तितवन्तः श्रीहरिदासोपाध्यायाः सर्वथा न विस्मरणीयाः। प्रांशुपालपदवीतो निवृत्ता अपीमे निर्वहणमण्डल्याः एस्.एम्.एस्.पि.सभायाः कार्यदर्शिपदेऽनुवर्तमाना अद्यापि रात्रिन्दिवं शालाभिवृद्धिकार्येषु निरन्तरमुद्यता इति सर्वथापि श्लाघनीयम्।*

*पण्डिताग्रण्यः श्रीहरिदासोपाध्यायाः अधीतिबोधाचरणैश्चतुर्भिरपि प्रकारैः संस्कृतवाङ्मयसेवां श्रद्धया व्यधुः। पुत्रनिर्विशेषं परिपालिताः शिष्याः एतदीयामद्वितीयां शिष्यवत्सलतां चतसृष्वपि दिक्षु प्रसारयन्ति। अष्टमठाधीशानामपि विश्वासपात्रमिमे परोपकारनिरताः प्रथिताः। अखिलकर्नाटकसंस्कृतपरिषत् कलावृन्द-कर्नाटकसङ्घप्रभृतिषु प्रमुख-स्थानमलङ्कृतवद्भिः श्रीहरिदासोपाध्यायैः साहित्यसंस्कृतिप्रसारेऽपि गणनीया सेवा विहिता।*

*तदेवं सारस्वतसेवामेव जीवनसर्वस्वं मत्वा सार्धपञ्चदशकानि सार्थकमेव यापितवतामेतेषां सम्माननं परमं कर्तव्यं मन्वानाः स्थलीया नागरिकाः पर्यायपीठाधीशानां श्रीविश्वेशतीर्थानां नेतृतायां इतरमठाधीशानां मार्गदर्शितायां च समितिमेकां व्यरचयन्। सेयं समितिः मठाधिपतीनां, संस्कृताभिमानिनां, सहृदयानां, विशेषतः प्राक्तन-विद्यार्थिनां च परिपूर्णेन सहकारेण रक्ताक्षीयपुष्यबहुलत्रयोदश्यां (१९-१-१९८५ दिनाङ्के) श्रीकृष्णमठे श्रीपेजावरमठाधीशानामाध्यक्ष्ये*

*श्रीमददमारुमठाधीशानां श्रीविबुधेशतीर्थानां हस्तेन श्रीमतामुपाध्यायानां सम्माननं सवैभवं व्यधात् । समारम्भस्यास्य स्मारकतया ग्रन्थमेकं प्रकाशयितुमना इयं समितिः निखिलकर्मानुष्ठानोपयुक्तवैदिकमन्त्रसङ्ग्रहात्मकं 'मन्त्रसङ्ग्रह'मिमं सहृदयानां हस्ते समर्पयति । पुस्तकस्यास्य समुद्घाटनं श्रीविद्यामान्यतीर्थैः श्रीपलिमारु-भण्डारकेरिमठाधीशैः सानुग्रहं विहितम् । सम्पादनकार्यञ्च सदस्यपञ्चकघटितया ग्रन्थसम्पादनसमित्या सोत्साहमनुष्ठितम् । यदीदं पुस्तकं वैदिककर्मानुष्ठातृणामुपकाराय कल्पेत तर्ह्ययमास्माकीन उद्यमः सफलतां भजेत । यथाशक्ति प्रयत्ने विहितेऽपि केचन मुद्रणदोषा उर्वरिता इति सविषादमङ्गीकुर्मः ।*

*सम्मानसमारम्भेऽस्मिन् ग्रन्थप्रकाशनकार्ये च नानाविधान् सहकारान् प्रदत्तवद्भ्यः सर्वेभ्योऽपि एकयैवोक्त्या सबहुमानं धन्यवादानर्पयामः ।*

क्रोधनसंवत्सरे वैशाखबहुलैकादशी
दिनाङ्कः १५-५-१९८५

**श्रीहरिदासोपाध्यायसम्मानसमितिः**
संस्कृतमहापाठशाला
उडुपि

## द्वितीयमुद्रणे प्रकाशकानां पूर्वाभाष्यम्

*१९८५ क्रिस्तवत्सरे प्रकाशितोऽयं ग्रन्थः सहृदयैः सोत्साहं पुरस्कृतः पञ्चषैरेव वर्षैः निःशेषं विक्रीत इति साभिमानं स्मरामः । पुनर्मुद्रणार्थं अभिमानिभिः पुनःपुनः प्रार्थिततया द्वितीयमुद्रणे कृतोद्यमोऽहं अनेकेषां सहकारबलात् कृतकृत्यः संवृत्त इति नितमां सन्तृप्यामि । समेषामधमर्णतां च प्रकटयामि ।*

वृषसंवत्सरस्य भाद्रपदशुक्लचतुर्दशी
1-9-2001

**श्री के. हरिदासोपाध्यायः**

# तृतीय मुद्रणे प्रकाशकानां पूर्वाभाष्यम्

2001 क्रिस्त संवत्सरे मुद्रितोयं ग्रन्थः सन्तुष्टैर्वैदिकैः पूर्ववत् पुरस्कृतः। द्वितीय मुद्रणेन प्रकाशितोयं ग्रन्थः पूर्ववत् पञ्चभैरेव वर्षैः साकल्येन विक्रीत इति सानन्दम् निवेदयामः। तृतीय मुद्रणार्थं मामकैः पोनः पुन्येन नियोजिततया तृतीय मुद्रणे उत्सुकोहं बहूनां प्रोत्साहबलात्कृतार्थः सञ्चात इति मोमुद्यते मनो मे। सर्वेषां कृतज्ञतां च समर्पयामि।

श्री के. हरिदासोपाध्यायः
नन्दन संवत्सरस्य
**कार्तिक कृष्ण त्रयोदशी**
11–12–2012

# विषयसूचिका

* * *

ॐ

।। श्री गुरुभ्यो नमः ।।

# मन्त्रसंग्रहः

## सन्ध्यावन्दनमन्त्राः

गणानां त्वा गृत्समदो गणपतिर्जगती ।

**गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ।।** *(ऋ. २-२३-१)*

आपोहिष्ठेति तृचस्य सूक्तस्य आम्बरीषः सिन्धुद्वीप ऋषिः । दैवी गायत्री छन्दः । आपो देवता ।।

**आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे ।। १ ।। यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ।। २ ।। तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ।। ३ ।।** *(ऋ. १०-९-१, २, ३)*

सूर्यश्चे (अग्निश्चे) त्यस्य मन्त्रस्य नारायण (हिरण्यगर्भ) ऋषिः । प्रकृतिः छन्दः । सूर्य (अग्नि) मन्युमन्युपतयो रात्रि (अह) र्देवता ।।

**सूर्यश्च (अग्निश्च) मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः । पापेभ्यो रक्षन्ताम् । यद्रात्र्या (यदह्ना) पापमकार्षम् । मनसा वाचा हस्ताभ्याम् । पद्भ्यामुदरेण शिश्ना । रात्रि (अह) स्तदवलुम्पतु ।**

यत्किञ्च दुरितं मयि । इदमहं माममृतयोनौ । सूर्ये (सत्ये) ज्योतिषि जुहोमि स्वाहा ॥

विश्वामित्र ऋषिः । दैवी गायत्री छन्दः ।सविता देवता ।

ॐ भूर्भुवःस्वः । तत्सवितुर्वरेण्यम् । भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥

यदद्यकच्च आङ्गिरसः सुकक्षः सूर्यो (इन्द्रो) गायत्री ।

यदद्य कच्च वृत्रहन्नुदगा अभि सूर्य । सर्वं तदिन्द्र ते वशे ॥
(ऋ. ८-९३-४)

उद्वेदभि सुकक्ष आङ्गिरसः । अग्निः (इन्द्रः) । गायत्री ।

उद्वेदभि श्रुतामघं वृषभं नर्यापसम् । अस्तारमेषि सूर्य ॥
(ऋ. ८-९३-१)

गाथिनो (गाधिनो) विश्वामित्र ऋषिः । दैवीगायत्रीत्रिष्टुभौ छन्दसी । मित्रो देवता ।

मित्रस्य चर्षणीधृतो वो देवस्य सानसि । द्युम्नं चित्रश्रवस्तमम् ॥
(ऋ. ३-५९-६)

मित्रो जनान् यातयति ब्रुवाणो मित्र दाधार पृथिवीमुत द्याम् ।
मित्रः कृष्टीरनिमिषाभि चष्टे मित्राय हव्यं घृतवज्जुहोत ॥
प्र स मित्र मर्तो अस्तु प्रयस्वान् यस्त आदित्य शिक्षति व्रतेन ।
न हन्यते न जीयते त्वोतो नैनमंहो अश्नोत्यन्तितो न दूरात् ॥
(ऋ. ३-५९-१, २)

इमं मे वरुण आजीगर्तिः शुनःशेपः वरुणो गायत्री ।

इमं मे वरुण श्रुधी हवमद्या च मृळय । त्वामवस्युरा चके ॥
(ऋ. १-२५-१९)

तत्त्वायामि आजीगर्तिः शुनःशेपो वरुणस्त्रिष्टुप् ।

तत् त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः ।
अहेळमानो वरुणेह बोध्युरुशंस मा न आयुः प्रमोषीः ॥
(ऋ. १-२४-११)

इन्द्रश्रेष्ठानि गृत्समद इन्द्रस्त्रिष्टुप् ।

इन्द्र श्रेष्ठानि द्रविणानि धेहि चित्तिं दक्षस्य सुभगत्वमस्मे । पोषं रयीणामरिष्टिं तनूनां स्वाद्मानं वाचः सुदिनत्वमह्नाम् ॥
(ऋ. २-२१-६)

ध्रुवासुत्वा मैत्रावरुणिर्वसिष्ठो वरुणस्त्रिष्टुप् ।

ध्रुवासु त्वासु क्षितिषु क्षियन्तो व्य१स्मत् पाशं वरुणो मुमोचत् ।
अवो वन्वाना अदितेरुपस्थाद्यूयं पात स्वस्तिभिः सदा नः ॥
(ऋ. ७-८८-७)

ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः ॥

आपः पुनन्त्वित्यस्य मन्त्रस्य पूत ऋषिः । अष्टिश्छन्दः । आपो देवता ।

आपः पुनन्तु पृथिवीं पृथिवी पूता पुनातु माम् । पुनन्तु ब्रह्मणस्पतिर्ब्रह्म पूता पुनातु माम् । यदुच्छिष्टमभोज्यं यद्वा दुश्चरितं मम । सर्वं पुनन्तु मामापोऽसतां च प्रतिग्रहꣳ स्वाहा ॥

हंसः शुचिषत् गौतमो वामदेवः सूर्यो जगती ।

हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद् व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम् ॥
(ऋ. ४-४०-५)

**आ कृष्णेन रजसा** (नवग्रहप्रकरणे)

प्रातर्देवीं आत्रेय उरुचक्रिः मित्रावरुणौ त्रिष्टुप् ।

प्रातर्देवीमदितिं जोहवीमि मध्यन्दिन उदिता सूर्यस्य । राये
मित्रावरुणा सर्वतातेळे तोकाय तनयाय शं योः ॥
(ऋ. ५-६९-३)

उद्वयं प्रस्कण्वः काण्वः सूर्योऽनुष्टुप् ।

उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् । देवं देवत्रा सूर्यमगन्म
ज्योतिरुत्तमम् ॥ (ऋ. १-५०-१०)

उदु त्यं प्रस्कण्वः काण्वः सूर्यो गायत्री ।

उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥
(ऋ. १-५०-१)

चित्रं देवानां कुत्स आङ्गिरसः सूर्यस्त्रिष्टुप् ।

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा
द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥
(ऋ. १-११५-१)

तच्चक्षुर्देवहितं शुक्रमुच्चरत् । पश्येम शरदः शतम् । जीवेम शरदः
शतम् । नन्दाम शरदः शतम् । मोदाम शरदः शतम् । भवाम
शरदः शतम् । शृणवाम शरदः शतम् । प्रब्रवाम शरदः शतम् ।

अजिताः स्याम शरदः शतम् । ज्योक् पश्येम सूर्यं दृशे ॥ य
उदगान्महतोऽर्णवाद्विभ्राजमानः सलिलस्य मध्यात् । अनानुदो
वृषभो रोहिताक्षः सूर्यो विपश्चिन्मनसा पुनातु ॥

प्रत्यवरोह हिरण्यगर्भोऽग्निरष्टिः ।

प्रत्यवरोह जातवेदः पुनस्त्वं देवेभ्यो हव्यं वहतु प्रजानन् ।
प्रजां पुष्टिं रयिमस्मासु धेह्यथा भव यजमानाय शं योः ॥

अयं ते योनिर्गाथिनो विश्वामित्रोऽग्निरनुष्टुप् ।

अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः । तं जानन्नग्न
आसीदाथानो वर्धया गिरः ॥ (ऋ. ३-२९-१०)

## देवपूजोपयुक्ता मन्त्राः

निषुसीद वैरूपो नभःप्रभेदन इन्द्रस्त्रिष्टुप् ।

नि षु सीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनाम् । न ऋते
त्वत्क्रियते किं चनारे महामर्कं मघवञ्चित्रमर्च ॥
(ऋ. १०-११२-९)

शतधारं गाथिनो विश्वामित्रः उपाध्यायस्त्रिष्टुप् ।

शतधारमुत्समक्षीयमाणं विपश्चितं पितरं वक्त्वानाम् । मेळिं
मदन्तं पित्रोरुपस्थे तं रोदसी पिपृतं सत्यवाचम् ॥
(ऋ. ३-२६-९)

आत्मा देवानां अनिलो वातायनो वायुस्त्रिष्टुप् ।

आत्मा देवानां भुवनस्य गर्भो यथावशं चरति देव एषः । घोषा इदस्य शृण्विरे न रूपं तस्मै वाताय हविषा विधेम ॥
(ऋ. १०-१६८-४)

ॐ शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् । ॐ शान्तिः शान्तिः शान्तिः । ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु । मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः ॥

अग्निमीळ इति नवर्चस्य सूक्तस्य वैश्वामित्रो मधुच्छन्दा ऋषिः । गायत्री छन्दः । अग्निर्देवता ॥

अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥ १ ॥ अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत । स देवाँ एह वक्षति ॥ २ ॥ अग्निना रयिमश्नवत्पोषमेव दिवेदिवे । यशसं वीरवत्तमम् ॥ ३ ॥ अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि । स इद्देवेषु गच्छति ॥ ४ ॥ अग्निर्होता कविक्रतुः सत्यश्चित्र-श्रवस्तमः । देवो देवेभिरागमत् ॥ ५ ॥ यदङ्ग दाशुषे त्वमग्ने

भद्रं करिष्यसि । तवेत्तत्सत्यमङ्गिरः ॥ ६ ॥ उप त्वाग्ने दिवेदिवे दोषावस्तर्धिया वयम् । नमो भरन्त एमसि ॥ ७ ॥ राजन्तमध्वराणां गोपामृतस्य दीदिविम् । वर्धमानं स्वे दमे ॥ ॥ ८ ॥ स नः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नः स्वस्तये ॥ ९ ॥ *(ऋ. १-१-१-९)*

इषे त्वोर्जे त्वा वायवः स्थोपायवः स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्निया देवभागमूर्जस्वतीः पयस्वतीः प्रजावतीरनमीवा अयक्ष्मा मा वः स्तेन ईशत माऽघशꣳसो रुद्रस्य हेतिः परि वो वृणक्तु ध्रुवा अस्मिन् गोपतौ स्यात बह्वीर्यजमानस्य पशून् पाहि ॥ *(तै. सं. आदौ)*

अग्न आयाहि वीतये गृणानो हव्यदातये । निहोता सत्सि बर्हिषि ॥ *(सा. १, ऋ. ६-१६-१०)*

शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभि स्रवन्तु नः ॥ *(अथर्व. ऋ. १०-९-४)*

आप्यायस्व गोतमो राहूगणः । पवमानः सोमो गायत्री ।

आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य सङ्गथे ॥ *(ऋ. १-९१-१६, ९-३१-४)*

दधिक्राव्णो गोतमो वामदेवो दधिक्राः अनुष्टुप् ।

**दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखा करत्प्र ण आयूंषि तारिषत् ।।** *(ऋ. ४-३९-६)*

घृतं मिमिक्षे शौनको गृत्समदः स्वाहाकृतयस्त्रिष्टुप् ।

**घृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम । अनुष्वधमावह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम् ।।** *(ऋ. २-३-११)*

मधुवातेति तृचस्य गोतमो राहूगणो विश्वे देवा गायत्री ।

**मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ।। १ ।। मधु नक्तमुतोषसो मधुमत् पार्थिवं रजः । मधु द्यौरस्तु नः पिता ।। २ ।। मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ।। ३ ।।** *(ऋ. १-९०-६, ७, ८)*

स्वादुः पवस्व वेनो भार्गवः पवमानः सोमो जगती ।

**स्वादुः पवस्व दिव्याय जन्मने स्वादुरिन्द्राय सुहवीतुनाम्ने । स्वादुर्मित्राय वरुणाय वायवे बृहस्पतये मधुमाँ अदाभ्यः ।।** *(ऋ. ९-८५-६)*

**याः फलिनीर्या** (पुण्याहवाचने)

या वां कशा मेधातिथिः काण्वः, अश्विनौ गायत्री ।

**या वां कशा मधुमत्यश्विना सूनृतावती । तया यज्ञं मिमिक्षतम् ।।** *(ऋ. १-२२-३)*

मान एकस्मिन् काण्वत्रिशोकः इन्द्रो गायत्री ।

**मा न एकस्मिन्नागसि मा द्वयोरुत त्रिषु । वधीर्मा शूर भूरिषु ।।**
(ऋ. ८-४५-३४)

## पुण्याहवाचनमन्त्राः

पवित्रं ते पवित्र आङ्गिरसः (परब्रह्म) पवमानः सोमः (परमात्मा) जगती (त्रिष्टुप्) ।

**पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः ।**
**अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तस्तत्समाशत ।।**
(ऋ. ९-८३-१)

देवीं वाचं नेमो भार्गवो वाक् त्रिष्टुप् ।

**देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति । सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु ।।**
(ऋ. ८-१००-११)

**गणानां त्वा गणपतिं** (आदौ)

**देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।**

महीद्यौः मेधातिथिः काण्वो द्यावापृथिव्यौ गायत्री ।

**मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः ।।**
(ऋ. १-२२-१३)

येनतोकायेत्यस्याः आत्रेयः श्यावाश्वः मरुतः सतोबृहती ।

**येन तोकाय तनयाय धान्यं१ बीजं वहध्वे अक्षितम् । अस्मभ्यं तद्धत्तन यद्व ईमहे राधो विश्वायु सौभगम् ।।** (ऋ. ५-५३-१३)

आकलशेष्वित्यस्याः गाथिनो विश्वामित्रः पवमानः सोमो गायत्री ।

आकलशेषु धावति श्येनो वर्म वि गाहते । अभि द्रोणा कनिक्रदत् ॥ (ऋ. ९-६७-१४)

तन्तुंतन्वन्नित्यस्याः देवा अग्निर्जगती ।

तन्तुं तन्वन्रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान् । अनुल्बणं वयत जोगुवामपो मनुर्भव जनया दैव्यं जनम् ॥ (ऋ. १०-५३-६)

इमं म इत्यस्याः सिन्धुक्षित् प्रैयमेधः नद्यो जगती ।

इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या । असिक्न्या मरुद्वृधे वितस्तयाऽऽर्जीकीये शृणुह्या सुषोमया ॥ (ऋ. १०-७५-५)

तपोष्पवित्रमित्यस्याः पवित्र आङ्गिरसः पवमानः सोमो जगती ।

तपोष्पवित्रं विततं दिवस्पदे शोचन्तो अस्य तन्तवो व्यस्थिरन् । अवन्त्यस्य पवीतारमाशवो दिवस्पृष्ठमधि तिष्ठन्ति चेतसा ॥ (ऋ. ९-८३-२)

सहिरत्नानीत्यस्याः श्यावाश्वः सविता गायत्री ।

स हि रत्नानि दाशुषे सुवाति सविता भगः । तं भागं चित्रमीमहे ॥ (ऋ. ५-८२-३)

अश्वत्थेव इत्यस्या आथर्वणो भिषगोषधयोऽनुष्टुप् ।

अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता । गोभाज इत्किलासथ यत्सनवथ पूरुषम् ।। (य. १०-९७-५)

पूर्णादर्वि विश्वेदेवाः शतक्रतुरनुष्टुप् ।

पूर्णा दर्वि परा पत सुपूर्णा पुनरापत । वस्नेव वि क्रीणावहा इषमूर्जꣳ शतक्रतो ।। (य. ९-८-४-२)

याःफलिनीरित्यस्या आथर्वणो भिषगोषधयोऽनुष्टुप् ।

याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः । बृहस्पति प्रसूतास्ता नो मुञ्चन्त्वंहसः ।। (ऋ. १०-९७-१५)

गन्धद्वारां चिक्लीतेन्दिरानुष्टुप् ।

ान्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां ामिहोप ह्वये श्रियम् ।। (ऋ. परिशिष्टे)

अर्चत प्रार्चतेति प्रियमेध आङ्गिरस इन्द्रोऽनुष्टुप् ।

अर्चत प्रार्चत प्रियमेधासो अर्चत । अर्चन्तु पुत्रका उत पुरं न धृष्ण्वर्चत ।। (ऋ. ८-६९-८)

आयने ते स्तम्बमित्र अग्निरनुष्टुप् ।

आयने ते परायणे दूर्वा रोहन्तु पुष्पिणीः । ह्रदाश्च पुण्डरीकाणि समुद्रस्य गृहा इमे ।। (ऋ. १०-१४२-८)

काण्डात्काण्डात् प्ररोहन्ती परुषः परुषः परि । एवा नो दूर्वे प्र तनु सहस्रेण शतेन च ॥ (य. ४-२-९-३)

तत्त्वायामि (सन्ध्यावन्दनप्रकरणे)

भद्रं कर्ण इत्यस्याः गौतमो विश्वेदेवास्त्रिष्टुप् ।

भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥ (ऋ. १-८९-८)

द्रविणोदा इत्यस्याः कुत्सो द्रविणोदा अग्निस्त्रिष्टुप् ।

द्रविणोदा द्रविणसस्तुरस्य द्रविणोदाः सनरस्य प्र यंसत् । द्रविणोदा वीरवतीमिषं नो द्रविणोदा रासते दीर्घमायुः ॥ (ऋ. १-९६-८)

सवितापश्चातादित्यस्याः लुशो धानाकः विश्वेदेवास्त्रिष्टुप् ।

सविता पश्चातात् सविता पुरस्तात् सवितोत्तरात्तात् सविता धरात्तात् । सविता नः सुवतु सर्वतातिं सविता नो रासतां दीर्घमायुः ॥ (ऋ. १०-३६-१४)

नवोनव इत्यस्याः सूर्या सावित्री चन्द्रमास्त्रिष्टुप् ।

नवोनवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम् । भागं देवेभ्यो वि दधात्यायन् प्र चन्द्रमास्तिरते दीर्घमायुः ॥ (ऋ. १०-८५-१९)

उच्चा दिवीत्यस्याः आङ्गिरसो दिव्यः प्राजापत्यस्त्रिष्टुप् ।

उच्चा दिवि दक्षिणावन्तो अस्थुर्ये अश्वदाः सह ते सूर्येण ।
हिरण्यदा अमृतत्वं भजन्ते वासोदाः सोम प्र तिरन्त आयुः ॥
(ऋ. १०-१०७-२)

आपउन्दन्त्वित्यस्याः सोमऋषिः द्विपदा गायत्री छन्दः ।

आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे ॥ (य. १-२-१-१)

यस्त्वा हृदा यस्मैत्वमित्यनयोः आत्रेयवसुश्रुतः अग्निस्त्रिष्टुप् ।

यस्त्वा हृदा कीरिणा मन्यमानोऽमर्त्यं मर्त्यो जोहवीमि । जातवेदो
यशो अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमश्याम् ॥ १ ॥ यस्मै
त्वं सुकृते जातवेद उ लोकमग्ने कृणवः स्योनम् । अश्विनं स
पुत्रिणं वीरवन्तं गोमन्तं रयिं नशते स्वस्ति ॥ २ ॥
(ऋ. ५-४-१०, ११)

सं त्वा सिञ्चामि यजुषा प्रजामायुर्धनं च ॥ (य. १-६-१-१)

उद्गातेवेत्यस्याः गृत्समदः शकुन्तः अतिशक्वरी । [अष्टिर्वा]

उद्गातेव शकुने साम गायसि ब्रह्मपुत्र इव सवनेषु शंससि ।
वृषेव वाजी शिशुमतीरपीत्या सर्वतो नः शकुने भद्रमा वद
विश्वतो नः शकुने पुण्यमा वद ॥ (ऋ. २-४३-२)

स्वस्तये वायुमित्यात्रेयो विश्वेदेवास्त्रिष्टुप् ।

स्वस्तये वायुमुप ब्रवामहै सोमं स्वस्ति भुवनस्य यस्पतिः ।
बृहस्पतिं सर्वगणं स्वस्तये स्वस्तय आदित्यासो भवन्तु नः ॥
(ऋ. ५-५१-१२)

ऋध्याम स्तोममित्यस्याः काश्यपो भूतांशोऽश्विनौ त्रिष्टुप् ।

ऋध्याम स्तोमं सनुयाम वाजमा नो मन्त्रं सरथेहोप यातम् ।
यशो न पक्वं मधु गोष्वन्तरा भूतांशो अश्विनोः काममप्राः ॥
(ऋ. १०-१०७-११)

श्रिये जात इत्यस्याः काण्वः पवमानः सोमस्त्रिष्टुप् ।

श्रिये जातः श्रिय आ निरियाय श्रियं वयो जरितृभ्यो दधाति ।
श्रियं वसाना अमृतत्वमायन् भवन्ति सत्या समिथा मितद्रौ ॥
(ऋ. ९-९४-४)

शुक्रेभिरङ्गैरित्यस्याः विश्वामित्रोऽग्निस्त्रिष्टुप् ।

शुक्रेभिरङ्गै रज आततन्वान् क्रतुं पुनानः कविभिः पवित्रैः ।
शोचिर्वसानः पर्यायुरपां श्रियो मिमीते बृहतीरनूनाः ॥
(ऋ. ३-१-५)

वास्तोष्पते चतसृणां मैत्रावरुणिः वास्तोष्पतिस्त्रिष्टुप् । अन्त्या गायत्री ।

वास्तोष्पते प्रति जानीह्यस्मान् त्स्वावेशो अनमीवोभवा नः ।
यत् त्वेमहे प्रतितन्नो जुषस्व शं नो भव द्विपदे शं चतुष्पदे
॥ १ ॥ वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वे-
भिरिन्दो । अजरासस्ते सख्ये स्याम पितेव पुत्रान् प्रति नो जुषस्व
॥ २ ॥ वास्तोष्पते शग्मया संसदा ते सक्षीमहि रण्वया
गातुमत्या । पाहि क्षेम उत योगे वरं नो यूयं पात स्वस्तिभिः
सदा नः ॥ ३ ॥ अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन् ।
सखा सुशेव एधि नः ॥ ४ ॥ (ऋ. ७-५४-१, २, ३; ७-५५-१)

**आपोहिष्ठा** (सन्ध्यावन्दनप्रकरणे तिस्रः ऋचः)

शंनो देवीत्यादिषण्णां आम्बरीषः सिन्धुद्वीप ऋषिः, गायत्री छन्दः, ईशाना वार्याणामित्यस्याः वर्धमाना गायत्री छन्दः, आपः पृणीतेत्यस्याः प्रतिष्ठा गायत्री छन्दः, इदमापः आपो अद्येत्यनयोः अनुष्टुप् छन्दः, आपो देवता ।

**शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभि स्रवन्तु नः ॥ १ ॥ ईशाना वार्याणां क्षयन्तीश्चर्षणीनाम् । अपो याचामि भेषजम् ॥ २ ॥ अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा । अग्निं च विश्वशम्भुवम् ॥ ३ ॥ आपः पृणीत भेषजं वरूथं तन्वे३ मम । ज्योक् च सूर्यं दृशे ॥ ४ ॥ इदमापः प्र वहत यत् किं च दुरितं मयि । यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् ॥ ५ ॥ आपो अद्यान्वचारिषं रसेन समगस्महि । पयस्वानग्न आ गहि तं मा संसृज वर्चसा ॥ ६ ॥**

*(ऋ. १०-९-४, ५, ६, ७, ८, ९)*

आ नो भद्रा, देवानां भद्रेत्यनयोः राहूगणो गोतमो विश्वेदेवा जगती ।

**आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः । देवा नो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवेदिवे ॥ १ ॥ देवानां भद्रा सुमतिर्ऋजूयतां देवानां रातिरभि नो नि वर्तताम् । देवानां सख्यमुप सेदिमा वयं देवा न आयुः प्र तिरन्तु जीवसे ॥ २ ॥**

*(ऋ. १-८९-१, २)*

अप नः शोशुचदघमित्यष्टर्चस्य सूक्तस्य आङ्गिरसः कुत्सोऽग्निर्गायत्री ।

अप नः शोशुचदघमग्ने शुशुग्ध्या रयिम् । अप नः शोशुचदघम् ॥ १ ॥ सुक्षेत्रिया सुगातुया वसूया च यजामहे । अप नः शोशुचदघम् ॥ २ ॥ प्र यद्भन्दिष्ठ एषां प्रास्माकासश्च सूरयः । अप नः शोशुचदघम् ॥ ३ ॥ प्र यत्ते अग्ने सूरयो जायेमहि प्र ते वयम् । अप नः शोशुचदघम् ॥ ४ ॥ प्र यदग्नेः सहस्वतो विश्वतो यन्ति भानवः । अप नः शोशुचदघम् ॥ ५ ॥ त्वं हि विश्वतोमुख विश्वतः परिभूरसि । अप नः शोशुचदघम् ॥ ६ ॥ द्विषो नो विश्वतोमुखाति नावेव पारय । अप नः शोशुचदघम् ॥ ७ ॥ स नः सिन्धुमिव नावयाति पर्षा स्वस्तये । अप नः शोशुचदघम् ॥ ८ ॥

*(ऋ. १-९७-१, २, ३, ४, ५, ६, ७, ८)*

एतोन्विन्द्रमिति तृचस्याङ्गिरसः तिरश्वी इन्द्रोऽनुष्टुप् ।

एतो न्विन्द्रं स्तवाम शुद्धं शुद्धेन साम्ना । शुद्धैरुक्थैर्वावृध्वांसं शुद्ध आशीर्वान् ममत्तु ॥ १ ॥ इन्द्र शुद्धो न आ गहि शुद्धः शुद्धाभिरूतिभिः । शुद्धो रयिं नि धारय शुद्धो ममद्धि सोम्यः ॥ २ ॥ इन्द्र शुद्धो हि नो रयिं शुद्धो रत्नानि दाशुषे । शुद्धो वृत्राणि जिघ्नसे शुद्धो वाजं सिषाससि ॥ ३ ॥

*(ऋ. ८-९५-७, ८, ९)*

स्वादिष्ठयेति दशर्चस्य सूक्तस्य वैश्वामित्रो मधुच्छन्दाः पवमानः सोमो गायत्री ।

स्वादिष्ठया मदिष्ठया पवस्व सोम धारया । इन्द्राय पातवे सुतः ॥ १ ॥ रक्षोहा विश्वचर्षणिरभि योनिमयोहतम् । द्रुणा सधस्थमासदत् ॥ २ ॥ वरिवोधातमो भव मंहिष्ठो वृत्रहन्तमः । पर्षि राधो मघोनाम् ॥ ३ ॥ अभ्यर्ष महानां देवानां वीतिमन्धसा । अभि वाजमुत श्रवः ॥ ४ ॥ त्वामच्छा चरामसि तदिदर्थं दिवेदिवे । इन्दो त्वे न आशसः ॥ ५ ॥ पुनाति ते परिस्रुतं सोमं सूर्यस्य दुहिता । वारेण शश्वता तना ॥ ६ ॥ तमीमण्वीः समर्य आ गृभ्णन्ति योषणो दश । स्वसारः पार्ये दिवि ॥ ७ ॥ तमीं हिन्वन्त्यग्रुवो धमन्ति बाकुरं दृतिम् । त्रिधातु वारणं मधु ॥ ८ ॥ अभी३ ममघ्न्या उत श्रीणन्ति धेनवः शिशुम् । सोममिन्द्राय पातवे ॥ ९ ॥ अस्येदिन्द्रो मदेष्वा विश्वा वृत्राणि जिघ्नते । शूरो मघा च मंहते ॥ १० ॥

(ऋ. ९-१-१, २, ३, ४, ५, ६, ७, ८, ९, १०)

तरत्समन्दीत्यादि चतसृणां काश्यपोऽवत्सारः पवमानः, सोमो गायत्री ।

तरत् स मन्दी धावति धारा सुतस्यान्धसः । तरत् स मन्दी धावति ॥ १ ॥ उस्रा वेद वसूनां मर्तस्य देव्यवसः । तरत् स मन्दी धावति ॥ २ ॥ ध्वस्रयोः पुरुषन्त्योरा सहस्राणि दद्महे ।

तरत् स मन्दी धावति ॥ ३ ॥ आ ययोस्त्रिंशतं तना सहस्राणि च दद्महे । तरत् स मन्दी धावति ॥ ४ ॥

(ऋ. ९-५८-१, २, ३, ४)

यदन्ति यच्चेति द्वादशर्चानां मैत्रावरुणिर्वसिष्ठ ऋषिः । गायत्री छन्दः, अलाय्यस्येति पुर उष्णिक् छन्दः, पुनन्तुमां यः पावमानीः पावमानीर्यो इत्येतेषां अनुष्टुप् छन्दः । सोमः पवमानो देवता, यत्तेपवित्रमिति द्वयोः अग्निः पवमानो देवता, उभाभ्यां देवसवितरित्यस्याः सविता पवमानो देवता, त्रिभिष्ट्वंदेवसवितरित्यस्याः अग्निसवितारौ पवमानो देवता, पुनन्तुमामित्यस्याः विश्वेदेवाः देवता, यः पावमानीः, पावमानीर्यो इत्यनयोः पावमान्यध्येता देवता ॥

यदन्ति यच्च दूरके भयं विन्दति मामिह । पवमान वि तज्जहि ॥ १ ॥ पवमानः सो अद्य नः पवित्रेण विचर्षणिः । यः पोता स पुनातु नः ॥ २ ॥ यत् ते पवित्रमर्चिष्यग्ने विततमन्तरा । ब्रह्म तेन पुनीहि नः ॥ ३ ॥ यत् ते पवित्रमर्चिवदग्ने तेन पुनीहि नः । ब्रह्मसवैः पुनीहि नः ॥ ४ ॥ उभाभ्यां देव सवितः पवित्रेण सवेन च । मां पुनीहि विश्वतः ॥ ५ ॥ त्रिभिष्ट्वं देव सवितर्वर्षिष्ठैः सोम धामभिः । अग्ने दक्षैः पुनीहि नः ॥ ६ ॥ पुनन्तु मां देवजनाः पुनन्तु वसवो धिया । विश्वे देवाः पुनीत मा जातवेदः पुनीहि मा ॥ ७ ॥ प्र प्यायस्व प्र स्यन्दस्व सोम विश्वेभिरंशुभिः । देवेभ्य उत्तमं हविः ॥ ८ ॥ उप प्रियं पनिप्नतं युवानमाहुतीवृधम् । अगन्म बिभ्रतो नमः

।। ९ ।। अलाय्यस्य परशुर्ननाश तमा पवस्व देव सोम । आखुं चिदेव देव सोम ।। १० ।। यः पावमानीरध्येत्यृषिभिः सम्भृतं रसम् । सर्वं स पूतमश्नाति स्वदितं मातरिश्वना ।। ११ ।। पावमानीर्यो अध्येत्यृषिभिः सम्भृतं रसम् । तस्मै सरस्वती दुहे क्षीरं सर्पिर्मधूदकम् ।। १२ ।। (ऋ. ९-६७, २९ - ३२)

शुचीवो हव्येत्यस्याः मैत्रावरुणिर्वसिष्ठः मरुतस्त्रिष्टुप् ।

शुची वो हव्या मरुतः शुचीनां शुचिं हिनोम्यध्वरं शुचिभ्यः । ऋतेन सत्यमृतसाप आयञ्छुचिजन्मानः शुचयः पावकाः ।। (ऋ. ७-५६-१२)

अग्निः शुचिव्रततम इत्यस्याः आङ्गिरसो विरूपोऽग्निर्गायत्री ।

अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः । शुची रोचत आहुतः ।। (ऋ. ८-४४-२१)

एष वां तंयुवमित्यनयोः वामदेवो गौतमोऽश्विनौ गायत्री ।

एष वां देवावश्विना कुमारः साहदेव्यः । दीर्घायुरस्तु सोमकः ।। १ ।। तं युवं देवावश्विना कुमारं साहदेव्यम् । दीर्घायुषं कृणोतन ।। २ ।। (ऋ. ४-१५-९, १०)

## पञ्चगव्यमेलनमन्त्राः

तत्सवितुर्वरेण्यं ... । (सन्ध्यावन्दनप्रकरणे)

गन्धद्वारां ... । (देवपूजाप्रकरणे)

**आप्यायस्व ... ।** (देवपूजाप्रकरणे)

**दधिक्राव्णो ... ।** (देवपूजाप्रकरणे)

**शुक्रमसि ज्योतिरसि तेजोऽसि देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः ॥** *(य. १-१-१०-१७)*

इरावती मैत्रावरुणिर्वसिष्ठो विष्णुस्त्रिष्टुप् ।

**इरावती धेनुमती हि भूतं सूयवसिनी मनुषे दशस्या । व्यस्तभ्ना रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः ॥** *(ऋ. ७-९९-३)*

इदं विष्णुरित्यस्याः मेधातिथिर्विष्णुर्गायत्री ।

**इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् । समूह्ळमस्य पांसुरे ॥** *(ऋ. १-२२-१७)*

मा नो महान्तमिति द्वयोः कुत्सो रुद्रो जगती ।

**मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम् । मा नो वधीः पितरं मोत मातरं मा नः प्रियास्तन्वो रुद्र रीरिषः ॥ १ ॥ मा नस्तोके तनये मा न आयौ मा नो गोषु मा नो अश्वेषु रीरिषः । वीरान् मा नो रुद्र भामितो वधीर्हविष्मन्तः सदमित् त्वा हवामहे ॥ २ ॥** *(ऋ. १-११४-७, ८)*

ब्रह्म जज्ञानं नकुलो (अग्निः) ब्रह्मा त्रिष्टुप् ।

**ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः । स बुध्निया उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥** *(ऋ. ४-२-८-४)*

अग्न आयूंषीति शतं वैखानसाः अग्निः पवमानो गायत्री ।

अग्न आयूंषि पवस आ सुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ॥ (ऋ. ९-६६-१९)

प्रजापते हिरण्यगर्भः प्रजापतिस्त्रिष्टुप् ।

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव । यत्कामास्ते न जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥ (ऋ. १०-१२१-१०)

## नान्दीसमाराधनमन्त्राः

तदस्तु मित्रावरुणा आत्रेयः प्रतिरथो विश्वेदेवास्त्रिष्टुप् ।

तदस्तु मित्रावरुणा तदग्ने शं योरस्मभ्यमिदमस्तु शस्तम् । अशीमहि गाधमुत प्रतिष्ठां नमो दिवे बृहते सादनाय ॥ (ऋ. ५-४७-७)

उपास्मै गायतेति नवर्चस्य काश्यपोऽसित ऋषिः, गायत्री छन्दः, सोमः पवमानो देवता ।

उपास्मै गायता नरः पवमानायेन्दवे । अभिदेवाँ इयक्षते ॥ १ ॥ अभि ते मधुना पयोऽथर्वाणो अशिश्रयुः । देवं देवाय देवयु ॥ २ ॥ स नः पवस्व शं गवे शं जनाय शमर्वते । शं राजन्नोषधीभ्यः ॥ ३ ॥ बभ्रवे नु स्वतवसेऽरुणाय दिविस्पृशे । सोमाय गाथमर्चत ॥ ४ ॥ हस्तच्युतेभिरद्रिभिः सुतं सोमं पुनीतन । मधावा धावता मधु ॥ ५ ॥ नमसेदुप सीदत दध्नेदभि

श्रीणीतन । इन्दुमिन्द्रे दधातन ।। ६ ।। अमित्रहा विचर्षणिः
पवस्व सोम शं गवे । देवेभ्यो अनुकामकृत् ।। ७ ।। इन्द्राय
सोम पातवे मदाय परिषिच्यसे । मनश्चिन्मनसस्पतिः ।। ८ ।।
पवमान सुवीर्यं रयिं सोम रिरीहि नः । इन्दविन्द्रेण नो युजा
।। ९ ।। (ऋ. ९-११/१-९)

अक्षन्नमीमिति राहूगणो गोतम इन्द्रः पङ्क्तिः ।

अक्षन्नमीमदन्त ह्यव प्रिया अधूषत । अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ।। (ऋ. १-८२-२)

इळामग्ने गाथिनो विश्वामित्रोऽग्निस्त्रिष्टुप् ।

इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध । स्यान्नः सूनुस्तनयो विजावाग्ने साते सुमतिर्भूत्वस्मे ।। (ऋ. ३-१-२३)

उत्तिष्ठ इति घौरः काण्वो ब्रह्मणस्पतिर्बृहती ।

उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे । उप प्र यन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा ।। (ऋ. १-४०-१)

## अग्निमुखोपयुक्ताः मन्त्राः

एह्यग्ने राहूगणो गौतमोऽग्निस्त्रिष्टुप् ।

एह्यग्न इह होता नि षीदादब्धः सु पुरएता भवा नः । अवतां त्वा रोदसी विश्वमिन्वे यजामहे सौमनसाय देवान् ।।
(ऋ. १-७६-२)

जुष्टो दमूना आत्रेयो वसुश्रुतोऽग्निस्त्रिष्टुप् ।

जुष्टो दमूना अतिथिर्दुरोण इमं नो यज्ञमुप याहि विद्वान् । विश्वा अग्ने अभियुजो विहत्या शत्रूयतामा भरा भोजनानि ॥

(ऋ. ५-४-५)

अग्निनाग्निस्तपसोऽग्निर्गायत्री (काण्वः मेधातिथिः निर्मथ्याहवनीयौ अग्नी गायत्री ।)

अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड् जुह्वास्यः ॥

(ऋ. १-१२-६)

विज्योतिषेत्यस्याः आत्रेयः वृशोऽग्निस्त्रिष्टुप् ।

वि ज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा । प्रादेवीर्मायाः सहते दुरेवाः शिशीते शृङ्गे रक्षसे विनिक्षे ॥

(ऋ. ५-२-९)

अग्ने अच्छा काण्वो मेधातिथिः (तापसोऽग्निः) अग्निः (विश्वेदेवाः) अनुष्टुप् ।

अग्ने अच्छा वदेह नः प्रत्यङ् नःः सुमना भव । प्र नो यच्छ विशस्पते धनदा असि नस्त्वम् ॥ (ऋ. १०-१४१-१)

चत्वारि शृङ्गा गौतमो वामदेवोऽग्निस्त्रिष्टुप् ।

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यों आ विवेश ॥

(ऋ. ४-५८-३)

विश्वानि न इति तृचस्यात्रेयो वसुश्रुतोऽग्निस्त्रिष्टुप् ।

विश्वानि नो दुर्गहा जातवेदः सिन्धुं न नावा दुरिताति पर्षि ।
अग्ने अत्रिवन्नमसा गृणानो ३स्माकं बोध्यविता तनूनाम् ॥ १ ॥
यस्त्वा हृदा कीरिणा मन्यमानोऽमर्त्यं मर्त्यो जोहवीमि । जातवेदो
यशो अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमश्याम् ॥ २ ॥ यस्मै
त्वं सुकृते जातवेद उ लोकमग्ने कृणवः स्योनम् । अश्विनं स
पुत्रिणं वीरवन्तं गोमन्तं रयिं नशते स्वस्ति ॥ ३ ॥

(ऋ. ५-४-९)

अयाश्चाग्नेऽस्यनभिशस्तीश्च सत्यमित्त्वमया असि । अयसा मनसा
(वयसा) धृतोऽयसा हव्यमूहिषे यानो धेहि भेषजम् ॥

(कृष्णयजुर्वेदे १-१-५)

अतो देवा मेधातिथिर्देवा गायत्री ।

अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे । पृथिव्याः सप्त
धामभिः ॥ (ऋ. १-२२-१६)

इदं विष्णुः ... । (पञ्चगव्यमेलनप्रकरणे) [20 पुटे]

अनाज्ञातमिति मन्त्रद्वयस्य हिरण्यगर्भोऽग्निरनुष्टुप् ।

अनाज्ञातं यदाज्ञातं यज्ञस्य क्रियते मिथु । अग्ने तदस्य कल्पय
त्वꣳ हि वेत्थ यथातथम् ॥ (तै. ब्रा. ३-७-१[illegible])

पुरुषसम्मितो यज्ञो यज्ञः पुरुषसम्मितः । अग्ने तदस्य कल्पय
त्वꣳ हि वेत्थ यथातथम् ॥ (तै. ब्रा. ३-७-११५)

यत्पाकत्रेत्याप्त्यस्त्रितोऽग्निस्त्रिष्टुप् ।

यत् पाकत्रा मनसा दीनदक्षा न यज्ञस्य मन्वते मर्त्यासः ।
अग्निष्टद्धोता क्रतुविद्विजानन् यजिष्ठो देवाँ ऋतुशो यजाति ॥
(ऋ. १०-२-५)

यद्वो देवा अभितपा मरुतस्त्रिष्टुप् ।

यद्वो देवा अतिपाद(त) यानि वाचा (च प्रयुती) चित्रयतं देवहेळनम् । अरायो अस्माँ अभिदुच्छुनायतेन्यत्रास्मन्मरुत-स्तन्निधेतन ॥ (तै. ब्रा. ३-७-११२)

भूरग्नये च पृथिव्यै च महते च स्वाहा ॥
भुवो वायवे चान्तरिक्षाय च महते च स्वाहा ॥
सुवरादित्याय च दिवे च महते च स्वाहा ॥
भूर्भुवस्सुवश्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहा ॥
(तै. उ. चतुर्थप्रश्ने)

स्वाहाग्नय इति आत्रेयो वसुश्रुतः स्वाहकृतयो गायत्री ।

स्वाहाग्नये वरुणाय स्वाहेन्द्राय मरुद्भ्यः । स्वाहा देवेभ्यो हविः ॥ (ऋ. ५-५-११)

यदग्ने बार्हस्पत्योऽग्निर्गायत्री ।

यदग्ने कानि कानि चिदा ते दारूणि दध्मसि । ता जुषस्व यविष्ठ्य ॥ १ ॥ यदत्त्युपजिह्विका यद्वम्रो अतिसर्पति । सर्वं तदस्तु ते घृतम् ॥ २ ॥ (ऋ. ८-१०२-२०, २१)

सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूयाः पूर्णमसि पूर्णं मे भूया अक्षितमसि मा मे क्षेष्ठाः प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तां दक्षिणायां दिशि मासाः पितरो मार्जयन्तां प्रतीच्यां दिशि गृहाः पशवो मार्जयन्तामुदीच्यां दिश्याप ओषधयो वनस्पतयो मार्जयन्तामूर्ध्वायां दिशि यज्ञः संवत्सरो यज्ञपतिर्मार्जयन्ताम् ॥ *(तै. सं. ६-५-३)*

आपो अस्मानित्यस्य देवश्रवाः आपस्त्रिष्टुप् ।

आपो अस्मान् मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु । विश्वं हि रिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचिरा पूत एमि ॥ *(ऋ. १०-१७-१०)*

**इदमापः प्रवहत** (पुण्याहवाचनप्रकरणे) [१५ पुटे]

सुमित्रा न आप ओषधयः सन्तु दुर्मित्रास्तस्मै भूयासुर्योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ॥ (तं हन्मि) *(तै. सं. १-४-४५-७)*

अग्ने त्वं न इति चतसृणां गौपायना लौपायना वा बन्धुः सुबन्धुः श्रुतबन्धुर्विप्रबन्धुश्च ऋषयः, द्विपदा विराट् छन्दः, अग्निर्देवता ।

अग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्यः । वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमं रयिं दाः ॥ १ ॥ स नो बोधि श्रुधी हवमरुष्या णो अघायतः समस्मात् । तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥ २ ॥ *(ऋ. ५-२४-१, २)*

अग्ने नयेति मैत्रावरुणिरगस्त्योऽग्निस्त्रिष्टुप् ।

अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् । युयोध्य१ स्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥

(ऋ. १-१८९-१)

## उत्सर्जनोपाकर्मोपयुक्ताः मन्त्राः

अभित्वेत्यस्य गोतमोऽग्निर्गायत्री ।

अभि त्वा गोतमा गिरा जातवेदो विचर्षणे । द्युम्नैरभि प्रणोनुमः ॥

(ऋ. १-७८-१)

गृणाना जमदग्निर्मित्रावरुणौ गायत्री ।

गृणाना जमदग्निना योनावृतस्य सीदतम् । पातं सोममृतावृधा ॥

(ऋ. ३-६२-१८)

उतासि मैत्रेति वसिष्ठपुत्रो वसिष्ठस्त्रिष्टुप् ।

उतासि मैत्रावरुणो वसिष्ठोर्वश्या ब्रह्मन् मनसोऽधि जातः । द्रप्सं स्कन्नं ब्रह्मणा दैव्येन विश्वे देवाः पुष्करे त्वाददन्त ॥

(ऋ. ७-३३-११)

ऋषे मन्त्रकृतामिति कश्यपः पवमानः सोमः पङ्क्तिः ।

ऋषे मन्त्रकृतां स्तोमैः कश्यपोद्वर्धयन् गिरः । सोमं नमस्य राजानं यो जज्ञे वीरुधां पतिरिन्द्रायेन्दो परि स्रव ॥

(ऋ. ९-११४-२)

अत्रिर्यद्वेत्यात्रेयः सप्तवध्रिरश्विनौ त्रिष्टुप् ।

अत्रिर्यद्वामवरोहन्नृबीसमजोहवीन्नाधमानेव योषा । श्येनस्य चिज्जवसा नूतनेना गच्छतमश्विना शन्तमेन ॥ (ऋ. ५-७८-४)

एवानः स्पृध इति बार्हस्पत्यो भारद्वाज इन्द्रस्त्रिष्टुप् ।

एवा नः स्पृधः समजा समत्स्विन्द्र रारन्धि मिथतीरदेवीः । विद्याम वस्तोरवसा गृणन्तो भरद्वाजा उत त इन्द्र नूनम् ॥ (ऋ. ६-२५-९)

प्रसूतो भक्षेति विश्वामित्रजमदग्नी इन्द्रो जगती ।

प्रसूतो भक्षमकरं चरावपि स्तोमं चेमं प्रथमः सूरिरुन्मृजे । सुते सातेन यद्यागमं वां प्रति विश्वामित्रजमदग्नी दमे । (ऋ. १०-१६७-४)

अग्निमीळे वैश्वामित्रः मधुच्छन्दा अग्निर्गायत्री ।

अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥ (ऋ. १-१-१)

कुषुम्भकस्तदगस्त्यो अमृणसूर्याः अनुष्टुप् ।

कुषुम्भकस्तदब्रवीद्गिरेः प्रवर्तमानकः । वृश्चिकस्यारसं विषमरसं वृश्चिक ते विषम् ॥ (ऋ. १-१९१-१६)

त्वमग्ने शौनको भार्गवो गृत्समदोऽग्निर्जगती ।

त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि । त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः ॥ (ऋ. २-१-१)

आवदन् शौनको गृत्समदः शकुन्तो जगती ।

आवदंस्त्वं शकुने भद्रमा वद तूष्णीमासीनः सुमतिं चिकिद्धि नः । यदुत्पतन् वदसि कर्करिर्यथा बृहद्वदेम विदथे सुवीराः ॥
(२-४३-३)

सोमस्य मा गाथिनो विश्वामित्रोऽग्निस्त्रिष्टुप् ।

सोमस्य मा तवसं वक्ष्यग्ने वह्निं चकर्थ विदथे यजध्यै । देवाँ अच्छा दीद्यद्युञ्जे अद्रिं शमाये अग्ने तन्वं जुषस्व ॥
(ऋ. ३-१-१)

गृणाना जमदग्निर्मित्रावरुणौ गायत्री ।

गृणाना जमदग्निना योनावृतस्य सीदतम् । पातं सोममृतावृधा ॥
(ऋ. ३-३२-१८)

त्वां ह्यग्ने वामदेवो गौतमोऽग्निरष्टिः ।

त्वां ह्यग्ने सदमित् समन्यवो देवासो देवमरतिं न्येरिर इतिक्रत्वा न्येरिरे । अमर्त्यं यजत मर्त्येष्वा देवमादेवं जनत प्रचेतसं विश्वमादेवं जनत प्रचेतसम् ॥
(ऋ. ४-१-१)

धामन्ते गौतमो वामदेव आपो जगती ।

धामन् ते विश्वं भुवनमधि श्रितमन्तः समुद्रे हृद्य१न्तरायुषि । अपामनीके समिथे य आभृतस्तमश्याम मधुमन्तं त ऊर्मिम् ॥
(ऋ. ४-५८-११)

अबोध्यग्निः बुधगविष्ठिरावात्रेयावग्निस्त्रिष्टुप् ।

अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम् । यह्वा इव प्र वयामुज्जिहानाः प्र भानवः सिस्रते नाकमच्छ ॥
(ऋ. ६-१-१)

गन्ता न एवया मरुदात्रेयः मरुतोऽतिजगती ।

गन्ता नो यज्ञं यज्ञियाः सुशमि श्रोता हवमरक्ष एवयामरुत् । ज्येष्ठासो न पर्वतासो व्योमनि यूयं तस्य प्रचेतसः स्यात दुर्धर्तवो निदः ॥ (ऋ. ५-८६-९)

त्वं ह्यग्ने बार्हस्पत्यो भारद्वाजोऽग्निस्त्रिष्टुप् ।

त्वं ह्यग्ने प्रथमो मनोताऽस्या धियो अभवो दस्म होता । त्वं सीं वृषन्नकृणोर्दुष्टरीतु सहो विश्वस्मै सहसे सहध्यै ॥ (ऋ. ६-१-१)

यो नः स्वः पायुर्भारद्वाजः विश्वेदेवा (देवब्रह्माणि) अनुष्टुप् ।

यो नः स्वो अरणो यश्च निष्ट्यो जिघांसति । देवास्तं सर्वे धूर्वन्तु ब्रह्म वर्म ममान्तरम् ॥ (ऋ. ६-७५-१९)

अग्निं नरो मैत्रावरुणिर्वसिष्ठोऽग्निर्विराट् ।

अग्निं नरो दीधितिभिररण्योर्हस्तच्युती जनयन्त प्रशस्तम् । दूरेदृशं गृहपतिमथर्युम् ॥ (ऋ. ७-१-१)

प्रतिचक्ष्व मैत्रावरुणिर्वसिष्ठ इन्द्रासोमावनुष्टुप् ।

प्रति चक्ष्व वि चक्ष्वेन्द्रश्च सोम जागृतम् । रक्षोभ्यो वधमस्यतमशनिं यातुमद्भ्यः ॥ (ऋ. ७-१०४-२५)

मा चिदन्यद्प्रगाथः काण्व इन्द्रो बृहती ।

मा चिदन्यत् वि शंसत सखायो मा रिषण्यत । इन्द्रमित् स्तोता वृषणं सचा सुते मुहुरुक्था च शंसत ॥ (ऋ. ८-१-१)

आग्नेयाहि काण्वः सौभरिरग्नामरुतोऽनुष्टुप् ।

आग्ने याहि मरुत्सखा रुद्रेभिः सोमपीतये । सोभर्या उप सुष्टुतिं मादयस्व स्वर्णरे ॥ (ऋ. ८-१०३-१४)

स्वादिष्ठया मधुच्छन्दाः पवमानः सोमो गायत्री ।

स्वादिष्ठया मदिष्ठया पवस्व सोम धारया । इन्द्राय पातवे सुतः ॥ (ऋ. ९-१-१)

यत् ते राजन् मारीचः कश्यपः पवमानः सोमः पङ्क्तिः ।

यत् ते राजञ्छृतं हविस्तेन सोमाभि रक्ष नः । अरातीवा मा नस्तारीन्मो च नः किं चनाममदिन्द्रायेन्दो परि स्रव ॥ (ऋ. ९-११४-४)

अग्रे बृहन्नाप्त्यस्त्रितोऽग्निस्त्रिष्टुप् ।

अग्रे बृहन्नुषसामूर्ध्वो अस्थान्निर्जगन्वान् तमसो ज्योतिषागात् । अग्निर्भानुना रुशता स्वङ्ग आ जातो विश्वा सद्मान्यप्राः ॥ (ऋ. १०-१-१)

समानी व आङ्गिरसः संवननः सञ्ज्ञानमनुष्टुप् ।

समानी व आकूतिः समाना हृदयानि वः । समानमस्तु वो मनो यथा वः सुसहासति ॥ (ऋ. १०-१९१-४)

## पुरुषसूक्तम्

सहस्रशीर्षेति षोडशर्चस्य सूक्तस्य नारायण ऋषिः । अनुष्टुप् छन्दः । अन्त्यायास्त्रिष्टुप् छन्दः । परमपुरुषो देवता ।

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥

पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ २ ॥

एतावानस्य महिमातो ज्यायांश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ ३ ॥

त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः ।
ततो विष्वङ् व्यक्रामत्साशनानशने अभि ॥ ४ ॥

तस्माद्विराळजायत विराजो अधि पूरुषः ।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ५ ॥

यत्पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ ६ ॥

तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः ।
तेन देवा अयजन्त साध्या ऋषयश्च ये ॥ ७ ॥

तस्माद्यज्ञात्सर्वहुतः सम्भृतं पृषदाज्यम् ।
पशून् तांश्चक्रे वायव्यानारण्यान् ग्राम्याश्च ये ॥ ८ ॥

तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ९ ॥

तस्मादश्वा अजायन्त ये के चोभयादतः ।
गावो ह जज्ञिरे तस्मात् तस्माज्जाता अजावयः ॥ १० ॥

यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।
मुखं किमस्य कौ बाहू का ऊरू पादा उच्येते ॥ ११ ॥

ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥ १२ ॥

चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।
मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत ॥ १३ ॥

नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रात् तथा लोकाँ अकल्पयन् ॥ १४ ॥

सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः ।
देवा यद्यज्ञं तन्वाना अबध्नन् पुरुषं पशुम् ॥ १५ ॥

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः
॥ १६ ॥

(ऋ. १०/९०)

## श्रीसूक्तम्

हिरण्यरूपो गृत्समदो भार्गवः शौनकः, अपांनपात् त्रिष्टुप् ।

**हिरण्यरूपः स हिरण्यसन्दृगपां नपात् सेदु हिरण्यवर्णः ।**
**हिरण्ययात् परि योनेर्निषद्या हिरण्यदा ददत्यन्नमस्मै ॥**

(ऋ. २-३५-१०)

हिरण्यवर्णामिति पञ्चदशर्चस्य सूक्तस्य आनन्दकर्दमश्रीदचिक्लीता इन्दिरासुता ऋषयः । श्रीर्देवता । आद्यास्तिस्रोऽनुष्टुभः । चतुर्थी बृहती । पञ्चमीषष्ठ्यौ त्रिष्टुभौ । ततोऽष्टावनुष्टुभः । अन्त्या आस्तारपङ्क्तिः ।

**हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ।**
**चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ १ ॥**

**तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।**
**यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥ २ ॥**

**अश्वपूर्वां रथमध्यां हस्तिनादप्रमोदिनीम् ।[१]**
**श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् ॥ ३ ॥**

**कां सोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् ।**
**पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥ ४ ॥**

**चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् ।**
**तां पद्मिनीमीं शरणं[२] प्र पद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणे ॥ ५ ॥**

---

१. प्रबोधिनीम् २. शरणमहं प्रपद्ये

आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः ।
तस्य फलानि तपसा नुदन्तु मा यान्तरा[३] याश्च बाह्या
अलक्ष्मीः ॥ ६ ॥

उपैतु मां देवसखः कीर्तिश्च मणिना सह ।
प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे ॥ ७ ॥

क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् ।
अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात् ॥ ८ ॥

गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ ९ ॥

मनसः काममाकूतिं वाचः सत्यमशीमहि ।
पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥ १० ॥

कर्दमेन प्रजा भूता मयि सम्भव कर्दम ।
श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥ ११ ॥

आपः स्रजन्तु स्निग्धानि चिक्लीत वस मे गृहे ।
नि च देवीं मातरं श्रियं वासय मे कुले ॥ १२ ॥

आर्द्रां पुष्करिणीं पुष्टिं सुवर्णां हेममालिनीम् ।[४]
सूर्यां[५] हिरण्मयीं लक्ष्मीं जातवेदो म आ वह ॥ १३ ॥

आर्द्रां यःकरिणीं यष्टिं पिङ्गलां पद्ममालिनीम् ।[६]

---

३. या अन्तरा ४. पिङ्गलां पद्ममालिनीम् ५. चन्द्रां ६. सुवर्णां

चन्द्रां[७] हिरण्मयीं लक्ष्मीं जातवेदो म आ वह ॥ १४ ॥

तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान् विन्देयं पुरुषानहम्
॥ १५ ॥

यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् ।
श्रियः[८] पञ्चदशर्चं च श्रीकामः सततं जपेत् ॥ १६ ॥

अश्वदायी गोदायी धनदायी महाधने ।
धनं मे जुषतां देवि सर्वकामांश्च देहि मे[९] ॥ १७ ॥

पुत्रपौत्रधनं धान्यं हस्त्यश्वादिगवेरथम् ।[१०]
प्रजानां भवसी माता आयुष्मन्तं करोतु माम्[११] ॥ १८ ॥

न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ।
भवन्ति कृतपुण्यानां भक्तानां श्रीसूक्तं जपेत्[१२] ॥ १९ ॥

चन्द्राभां लक्ष्मीमीशानां सूर्याभां श्रियमैश्वरीम् ।
चन्द्रसूर्याग्निवर्णाभां महालक्ष्मीमुपास्महे ॥ २० ॥

धनमग्निर्धनं वायुर्धनं सूर्यो धनं वसुः ।
धनमिन्द्रो बृहस्पतिर्वरुणं धनमस्तु ते[१३] ॥ २१ ॥

---

हेममालिनीम् ७. सूर्या । ८. सूक्तं ९. सर्वकामार्थसिद्धये
१०. हस्त्यश्वाश्वतरीरथम् ११. मे १२. भक्त्या श्रीसूक्तजापिनाम्
१३. वरुणो धनमश्विना; धनमश्नुते

वैनतेय सोमं पिब सोमं पिबतु वृत्रहा ।
सोमं धनस्य सोमिनो मह्यं ददातु सोमिनः ॥ २२ ॥

वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः ।
रोहन्तु सर्वबीजान्यव ब्रह्मद्विषो जहि ॥ २३ ॥

पद्मासने[१४] पद्मऊरू पद्माक्षी पद्मसम्भवे ।
तन्मे भजसि[१५] पद्माक्षि[१६] येन सौख्यं लभाम्यहम् ॥ २४ ॥

पद्मप्रिये पद्मिनि पद्महस्ते पद्मालये पद्मदलायताक्षि ।[१७]
विश्वप्रिये विष्णुमनोनुकूले[१८] त्वत्पादपद्मं मयि सन्निधत्स्व ॥ २५ ॥

महालक्ष्मी[१९] च विद्महे विष्णुपत्नी[२०] च धीमहि ।
तन्नो लक्ष्मीः प्रचोदयात् ॥ २६ ॥

सरसिजनिलये सरोजहस्ते धवलतरांशुकगन्धमाल्यशोभे ।
भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम् ॥ २७ ॥

यासापद्मासनस्था विपुलकटितटी पद्मपत्रायताक्षी
गम्भीरावर्तनाभिः स्तनभरनमिता शुभ्रवस्त्रोत्तरीया ।
लक्ष्मीर्दिव्यैर्गजेन्द्रैर्मणिगणखचितैः स्नापिता हेमकुम्भैः

---

१४. पद्मानने १५. त्वं मां भजस्व १६. पद्माक्षी
१७. पद्मानने पद्मविपद्मपत्रे पद्मप्रिये पद्मदलायताक्षि
१८. विश्वमनोऽनुकूले १९. महालक्ष्म्यै २०. विष्णुपत्न्यै

नित्यं सा पद्महस्ता मम वसतु गृहे सर्वमाङ्गल्ययुक्ता ॥
॥ २८ ॥

सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्र्यम्बके देवि नारायणि नमोऽस्तु ते ॥ २९ ॥

श्रीवर्चस्वमायुष्यमारोग्यमाविधाच्छोभमानं महीयते ।
धान्यं धनं[२१] पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः ॥
॥ ३० ॥

## बळित्थासूक्तम्

बळित्थेति पञ्चर्चस्य सूक्तस्य औचथ्यो दीर्घतमा ऋषिः। जगती छन्दः । अग्निर्देवता ।

बळित्था तद्वपुषे धायि दर्शतं देवस्य भर्गः सहसो यतो जनि ।
यदीमुपह्वरते साधते मतिर्ऋतस्य धेना अनयन्त सस्रुतः ॥ १ ॥
पृक्षो वपुः पितुमान् नित्य आशये द्वितीयमा सप्तशिवासु
मातृषु । तृतीयमस्य वृषभस्य दोहसे दशप्रमतिं जनयन्त योषणः
॥ २ ॥ निर्यदीं बुध्नान्महिषस्य वर्पस ईशानासः शवसा क्रन्त
सूरयः । यदीमनु प्रदिवो मध्व आ धवे गुहा सन्तं मातरिश्वा
मथायति ॥ ३ ॥ प्र यत्पितुः परमान्नीयते पर्या पृक्षुधो वीरुधो
दंसु रोहति । उभा यदस्य जनुषं यदिन्वत आदिद्यविष्ठो
अभवद्घृणा शुचिः ॥ ४ ॥ आदिन्मातृराविशद्यास्वा शुचिरहिं-

२१. धनं धान्यं

स्यमान उर्विया वि वावृधे । अनु यत् पूर्वा अरुहत् सनाजुवो
नि नव्यसीष्ववरासु धावते ॥ ५ ॥ (ऋ. १/१४१/१-५)

## स्वस्तिसूक्तम्

स्वस्ति नो मिमीतामिति पञ्चर्चस्य सूक्तस्य स्वस्त्यात्रेयो विश्वे देवास्त्रिष्टुभोऽन्त्ये द्वे अनुष्टुभौ ।

स्वस्ति नो मिमीतामश्विना भगः स्वस्ति देव्यदितिरनर्वणः ।
स्वस्ति पूषा असुरो दधातु नः स्वस्ति द्यावापृथिवी सुचेतुना
॥ १ ॥ स्वस्तये वायुमुप ब्रवामहै सोमं स्वस्ति भुवनस्य
यस्पतिः । बृहस्पतिं सर्वगणं स्वस्तये स्वस्तय आदित्यासो
भवन्तु नः ॥ २ ॥ विश्वे देवा नो अद्या स्वस्तये वैश्वानरो
वसुरग्निः स्वस्तये । देवा अवन्त्वृभवः स्वस्तये स्वस्ति नो रुद्रः
पात्वंहसः ॥ ३ ॥ स्वस्ति मित्रावरुणा स्वस्ति पथ्ये रेवति ।
स्वस्ति न इन्द्रश्चाग्निश्च स्वस्ति नो अदिते कृधि ॥ ४ ॥ स्वस्ति
पन्थामनु चरेम सूर्याचन्द्रमसाविव । पुनर्ददताघ्नता जानता सं
गमेमहि ॥ ५ ॥

[परिशिष्टम्-

स्वस्त्ययनं तार्क्ष्यमरिष्टनेमिं महद्भूतं वायसं देवतानाम् ।
असुरघ्नमिन्द्रसखं समत्सु बृहद्यशो नावमिवा रुहेम ॥ १ ॥

अंहोमुचमाङ्गिरसं गयं च स्वस्त्यात्रेयं मनसा च तार्क्ष्यम् ।
प्रयतपाणिः शरणं प्रपद्ये स्वस्ति सम्बाधेष्वभयं नो अस्तु ॥ २ ॥

(ऋ. ५/५१/११-१५)

## शकुन्तसूक्तम्

कनिक्रदिति तृचस्य सूक्तस्य शौनको गृत्समद ऋषिः । त्रिष्टुप् छन्दः । शकुन्तो देवता ।

कनिक्रदज्जनुषं प्रब्रुवाण इयर्ति वाचमरितेव नावम् । सुमङ्गलश्च शकुने भवासि मा त्वा काचिदभिभा विश्व्या विदत् ॥ १ ॥ मा त्वा श्येन उद्वधीन्मा सुपर्णो मा त्वा विददिषुमान् वीरो अस्ता । पित्र्यामनु प्रदिशं कनिक्रदत्सुमङ्गलो भद्रवादी वदेह ॥ २ ॥ अव क्रन्द दक्षिणतो गृहाणां सुमङ्गलो भद्रवादी शकुन्ते । मा नः स्तेन ईशत माघशंसो बृहद्वदेम विदथे सुवीराः ॥ ३ ॥

प्रदक्षिणिदिति तृचस्य सूक्तस्य शौनको गृत्समद ऋषिः । जगती छन्दः । द्वितीया अतिशक्वरी (अष्टिर्वा) । शकुन्तो देवता ।

प्रदक्षिणिदभि गृणन्ति कारवो वयो वदन्त ऋतुथा शकुन्तयः । उभे वाचौ वदति सामगा इव गायत्रं च त्रैष्टुभं चानु राजति ॥ १ ॥ उद्गातेव शकुने साम गायसि ब्रह्मपुत्र इव सवनेषु शंससि । वृषेव वाजी शिशुमतीरपीत्या सर्वतो नः शकुने भद्रमा वद विश्वतो नः शकुने पुण्यमा वद ॥ २ ॥ आवदंस्त्वं शकुने

भद्रमावद तूष्णीमासीनः सुमतिं चिकिद्धि नः । यदुत्पतन्वदसि कर्करिर्यथा बृहद्वदेम विदथे सुवीराः ॥ ३ ॥ *(ऋ. २-४२, ४३)*

*परिशिष्टम्-*

भद्रं वद दक्षणतो भद्रमुत्तरतो वद । भद्रं पुरस्तान्नो वद भद्रं पश्चात् कपिञ्जल ॥ १ ॥ भद्रं वद पुत्रैर्भद्रं वद गृहेषु च । भद्रमस्माकं नो वद भद्रं नो अभयं वद (कृधि) ॥ २ ॥ भद्रमधस्तान्नो वद भद्रमुपरिष्टान्नो वद । भद्रंभद्रं न आवद भद्रं नः सर्वतो वद ॥ ३ ॥ असपत्नः पुरस्तान्नः शिवं दक्षिणतस्कृधि । अभयं सततं पश्चाद्भद्रमुत्तरतो गृहे ॥ ४ ॥ यौवनानि महयसि जिग्युषामिव दुन्दुभिः । शकुन्तक प्रदक्षिणं शतपत्राभि नो वद ॥ ५ ॥ आवदंस्त्वं शकुने भद्रमावद तूष्णीमासीनः सुमतिं चिकिद्धि नः । यदुत्पतन्वदसि कर्करिर्यथा बृहद्वदेम विदथे सुवीराः ॥ ६ ॥

## विष्णुसूक्तम्

विष्णोर्नुकमिति षड्चस्य सूक्तस्य औचथ्यो दीर्घतमा ऋषिः । त्रिष्टुप् छन्दः । विष्णुर्देवता ॥

विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि । यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥ १ ॥ प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः ।

यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥ २ ॥
प्र विष्णवे शूषमेतु मन्म गिरिक्षित उरुगायाय वृष्णे । य इदं
दीर्घं प्रयतं सधस्थमेको विममे त्रिभिरित्पदेभिः ॥ ३ ॥ यस्य
त्री पूर्णा मधुना पदान्यक्षीयमाणाः स्वधया मदन्ति । य उ
त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा ॥ ४ ॥
तदस्य प्रियमभिपाथो अश्यां नरो यत्र देवयवो मदन्ति ।
उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः
॥ ५ ॥ ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा
अयासः । अत्राह तदुरुगायस्य वृष्णः परमं पदमव भाति भूरि
॥ ६ ॥

प्रवः पान्तमिति षड्चस्य सूक्तस्य औचथ्यो दीर्घतमा ऋषिः । जगती छन्दः । आद्यानां तिसृणामिन्द्राविष्णू देवते, ततस्तिसृणां विष्णुर्देवता ।

प्र वः पान्तमन्धसो धियायते महे शूराय विष्णवे चार्चत । या
सानुनि पर्वतानामदाभ्या महस्तस्थतुरर्वतेव साधुना ॥ १ ॥
त्वेषमित्था समरणं शिमीवतोरिन्द्राविष्णू सुतपा वामुरुष्यति ।
या मर्त्याय प्रतिधीयमानमित् कृशानोरस्तुरसनामुरुष्यथः
॥ २ ॥ ता ईं वर्धन्ति मह्यस्य पौंस्यं नि मातरा नयति रेतसे
भुजे । दधाति पुत्रोऽवरं परं पितुर्नाम तृतीयमधि रोचने दिवः
॥ ३ ॥ तत्तदिदस्य पौंस्यं गृणीमसीनस्य त्रातुरवृकस्य

मीह्ळुषः । यः पार्थिवानि त्रिभिरिद्विगामभिरुरु क्रमिष्टोरुगायाय जीवसे ॥ ४ ॥ द्वे इदस्य क्रमणे स्वर्दृशोऽभिख्याय मर्त्यो भुरण्यति । तृतीयमस्य नकिरा दधर्षति वयश्चन पतयन्तः पतत्रिणः ॥ ५ ॥ चतुर्भिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीँरवीविपत् । बृहच्छरीरो विमिमान ऋक्वभिर्युवाकुमारः प्रत्येत्याहवम् ॥ ६ ॥

भवामित्र इति पञ्चर्चस्य सूक्तस्य औचथ्यो दीर्घतमा ऋषिः । जगती छन्दः विष्णुर्देवता ॥

भवा मित्रो न शेव्यो घृतासुतिर्विभूतद्युम्न एवया उ सप्रथाः । अधा ते विष्णो विदुषा चिदर्ध्यः स्तोमो यज्ञश्च राध्यो हविष्मता ॥ १ ॥ यः पूर्व्याय वेधसे नवीयसे सुमज्जानये विष्णवे ददाशति । यो जातमस्य महतो महि ब्रवत् सेदु श्रवोभिर्युज्यं चिदभ्यसत् ॥ २ ॥ तमु स्तोतारः पूर्व्यं यथा विद ऋतस्य गर्भं जनुषा पिपर्तन । आस्य जानन्तो नाम चिद्विवक्तन महस्ते विष्णो सुमतिं भजामहे ॥ ३ ॥ तमस्य राजा वरुणस्तमश्विना क्रतुं सचन्त मारुतस्य वेधसः । दाधार दक्षमुत्तममहर्विदं व्रजं च विष्णुः सखिवाँ अपोर्णुते ॥ ४ ॥ आ यो विवाय सचथाय दैव्य इन्द्राय विष्णुः सुकृते सुकृत्तरः । वेधा अजिन्वत् त्रिषधस्थ आर्यमृतस्य भागे यजमानमाभजत् ॥ ५ ॥

अतो देवा इति षडृचस्य सूक्तस्य काण्वो मेधातिथि ऋषिः गायत्री छन्दः । विष्णुर्देवता ॥

अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे । पृथिव्याः सप्त धामभिः ॥ १ ॥ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूह्ळमस्य पांसुरे ॥ २ ॥ त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि धारयन् ॥ ३ ॥ विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा ॥ ४ ॥ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ ५ ॥ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत् परमं पदम् ॥ ६ ॥ *(ऋ. १/१५४, १५५, १५६) (१/२२/१६-२१)*

## मन्त्राक्षतकाले पठनीया मन्त्राः

पुनस्त्वाऽदित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः । घृतेन त्वं तनुवो वर्धयस्व सत्याः सन्तु यजमानस्य कामाः ॥ *(तै. सं. ४-२-३-१३)*

इन्द्रश्रेष्ठानि ... । *(सन्ध्यावन्दनप्रकरणे) [3 पुटे]*

सहस्राक्षेणेति तृचस्य प्रजापत्यो यक्ष्मनाशन इन्द्राग्नी त्रिष्टुप् । आहार्षं त्वेत्यस्या अनुष्टुप् ।

सहस्राक्षेण शतशारदेन शतायुषा हविषाहार्षमेनम् । ... यथेमं शरदो नयातीन्द्रो विश्वस्य दुरितस्य पारम् ॥ १ ॥ शतं जीव

शरदो वर्धमानः शतं हेमन्ताञ्छतमु वसन्तान् । शतमिन्द्राग्नी सविता बृहस्पतिः शतायुषा हविषेमं पुनर्दुः ॥ २ ॥ आहार्षं त्वाविदं त्वा पुनरागाः पुनर्नव। सर्वाङ्ग सर्वं ते चक्षुः सर्वमायुश्च तेऽविदम् ॥ ३ ॥ *(ऋ. १०-१६१-३, ४, ५)*

सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेव तेनाप्नोति सर्वं जयति ॥
*(तै.सं. ५-४-१२-७)*

ऋध्यास्म हव्यैर्नमसोपसद्य मित्रं देवं मित्रधेयं नो अस्तु । अनूराधान् हविषा वर्धयन्तः शतं जीवेम शरदः सवीराः ॥

## आयुर्ऋचः

भद्रं कर्णेभिः ... । *(पुण्याहप्रकरणे) [12पुटे]*

पुनःपुनर्गोतमो राहूगण उषास्त्रिष्टुप्।

पुनः पुनर्जायमाना पुराणी समानं वर्णमभि शुम्भमाना। श्वघ्नीव कृत्नुर्विज आमिनाना मर्तस्य देवी जरयन्त्यायुः ॥
*(ऋ. १-९२-१०)*

द्रविणोदाः ... । *(पुण्याहवाचनप्रकरणे) [12पुटे]*

उदीर्ध्वं जीवः कुत्स आङ्गिरस उषास्त्रिष्टुप्।

उदीर्ध्वं जीवो असुर्न आगादप प्रागात् तम आ ज्योतिरेति । आरैक् पन्थां यातवे सूर्यायागन्म यत्र प्रतिरन्त आयुः ॥
*(ऋ. १-११३-१६)*

दक्षिणावतां कक्षीवान् दैर्घतमस औशिजः स्वनयस्य दानस्तुतिस्त्रिष्टुप् ।

दक्षिणावतामिदिमानि चित्रा दक्षिणावतां दिवि सूर्यासः ।
दक्षिणावन्तो अमृतं भजन्ते दक्षिणावन्तः प्र तिरन्त आयुः ॥
(ऋ. १-१२५-६)

इमे भोजा गाथिनो विश्वामित्र इन्द्रस्त्रिष्टुप् ।

इमे भोजा अङ्गिरसो विरूपा दिवस्पुत्रासो असुरस्य वीराः ।
विश्वामित्राय ददतो मघानि सहस्रसावे प्रतिरन्त आयुः ॥
(ऋ. ३-५३-७)

यथाहत्यद्वामदेवो गौतमोऽग्निस्त्रिष्टुप् ।

यथा ह त्यद्वसवो गौर्यं चित् पदि षिताममुञ्चता यजत्राः ।
एवो ष्व१स्मन्मुञ्चता व्यंहः प्र तार्यग्ने प्रतरं न आयुः ॥
(ऋ. ४-१२-६)

यशस्करं बलवन्तं प्रभुत्वं तमेव राजाधिपतिर्बभूव ।
सङ्कीर्णनागाश्वपतिर्नराणां सुमङ्गल्यं सततं दीर्घमायुः ॥
(ऋ. परिशिष्ट ७/५५ सूक्तानन्तरम्)

गोमायुर्मैत्रावरुणिर्वसिष्ठः मण्डूकास्त्रिष्टुप् ।

गोमायुरदादजमायुरदात् पृश्निरदाद्धरितो नो वसूनि । गवां
मण्डूका ददतः शतानि सहस्रसावे प्र तिरन्त आयुः ॥
(ऋ. ७/१०३/१०)

इन्द्रावरुणा सुपर्णः काण्व इन्द्रावरुणौ जगती ।

इन्द्रावरुणा सौमनसमदृप्तं रायस्पोषं यजमानेषु धत्तम् । प्रजां
पुष्टिं भूतिमस्मासु धत्तं दीर्घायुत्वाय प्र तिरतं न आयुः ॥
(ऋ. ८-५९-७)

वृष्टिं दिवो दैवोदासिः प्रतर्दनः पवमानः सोमस्त्रिष्टुप्।

**वृष्टिं दिवः शतधारः पवस्व सहस्रसा वाजयुर्देववीतौ । सं सिन्धुभिः कलशे वावशानः समुस्रियाभिः प्रतिरन् न आयुः ॥**

*(ऋ. ९-९६-१४)*

**सविता पश्चात्तात् ... ।; नवो नवो भवति ... ।**
*(पुण्याहवाचनप्रकरणे) [12 पुटे]*

विद्युन्न ऐलः पुरूरवा उर्वशी त्रिष्टुप्।

**विद्युन्न या पतन्ती दविद्योद्भरन्ती मे अप्या काम्यानि । जनिष्टो अपो नर्यः सुजातः प्रोर्वशी तिरत दीर्घमायुः ॥**

*(ऋ. १०-९५-१०)*

**उच्चा दिवि ... ।** *(पुण्याहवाचनप्रकरणे) [12 पुटे]*

अग्निस्तुविश्रवस्तमं वसूयव आत्रेया अग्निरनुष्टुप्।

**अग्निस्तुविश्रवस्तमं तुविब्रह्माणमुत्तमम् । अतूर्तं श्रावयत्पतिं पुत्रं ददाति दाशुषे ॥** *(ऋ. ५-२५-५)*

स्वस्तिन इन्द्रो गोतमो राहूगणो विश्वे देवा विराट्स्थाना।

**स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥**

*(ऋ. १-८९-६)*

## समुद्रासूक्तम्

समुद्रादूर्मिरित्येकादशर्चस्य सूक्तस्य गौतमो वामदेवः, अग्निः (सूर्यो गावो घृतस्तुतिर्वा) त्रिष्टुप् अन्त्या जगती।

समुद्रादूर्मिर्मधुमाँ उदारदुपांशुना सममृतत्वमानट् । घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः ।। १ ।। वयं नाम प्रब्रवामा घृतस्यास्मिन् यज्ञे धारयामा नमोभिः । उप ब्रह्मा शृणवच्छस्यमानं चतुःशृङ्गोऽवमीद्गौर एतत् ।। २ ।। चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्तहस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आ विवेश ।। ३ ।। त्रिधा हितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्वविन्दन् । इन्द्र एकं सूर्य एकं जजान वेनादेकं स्वधया निष्टतक्षुः ।। ४ ।। एता अर्षन्ति हृद्यात् समुद्राच्छतव्रजा रिपुणा नावचक्षे । घृतस्य धारा अभि चाकशीमि हिरण्ययो वेतसो मध्य आसाम् ।। ५ ।। सम्यक् स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः । एते अर्षन्त्यूर्मयो घृतस्य मृगा इव क्षिपणोरीषमाणाः ।। ६ ।। सिन्धोरिव प्राध्वने शूघनासो वातप्रमियः पतयन्ति यह्वाः । घृतस्य धारा अरुषो न वाजी काष्ठा भिन्दन्नूर्मिभिः पिन्वमानः ।। ७ ।। अभि प्रवन्त समनेव योषाः कल्याण्यः स्मयमानासो अग्निम् । घृतस्य धाराः समिधो नसन्त ता जुषाणो हर्यति जातवेदाः ।। ८ ।। कन्या इव वहतुमेतवा उ अञ्ज्यञ्जाना अभि चाकशीमि । यत्र सोमः सूयते यत्र यज्ञो घृतस्य धारा अभि तत्पवन्ते ।। ९ ।। अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु भद्रा

द्रविणानि धत्त । इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत्पवन्ते ॥ १० ॥ धामन् ते विश्वं भुवनमधि श्रितमन्तः समुद्रे हृद्य१न्तरायुषि । अपामनीके समिथे य आभृतस्तमश्याम मधुमन्तं त ऊर्मिम् ॥ ११ ॥ (ऋ. ४/५८)

## भाग्यसूक्तम् - ऐकमत्यसूक्तसहितम्

प्रातरग्निमिति सप्तर्चस्य सूक्तस्य मैत्रावरुणिर्वसिष्ठ ऋषिः । आद्या जगती, शेषास्त्रिष्टुभः । भगो देवता । आद्याया अग्नीन्द्रमित्रवरुणाश्विभग-पूषब्रह्मणस्पतिसोमरुद्रा अन्त्याया उषाश्च देवताः ॥

प्रातरग्निं प्रातरिन्द्रं हवामहे प्रातर्मित्रावरुणा प्रातरश्विना । प्रातर्भगं पूषणं ब्रह्मणस्पतिं प्रातः सोममुत रुद्रं हुवेम ॥ १ ॥ प्रातर्जितं भगमुग्रं हुवेम वयं पुत्रमदितेर्यो विधर्ता । आध्रश्चिद्यं मन्यमानस्तुरश्चिद्राजा चिद्यं भगं भक्षीत्याह ॥ २ ॥ भग प्रणेतर्भग सत्यराधो भगेमां धियमुदवा ददन्नः । भग प्रणो जनय गोभिरश्वैर्भग प्रनृभिर्नृवन्तः स्याम ॥ ३ ॥ उतेदानीं भगवन्तः स्यामोत प्रपित्व उत मध्ये अह्नाम् । उतोदिता मघवन् त्सूर्यस्य वयं देवानां सुमतौ स्याम ॥ ४ ॥ भग एव भगवाँ अस्तु देवास्तेन वयं भगवन्तः स्याम । तं त्वा भग सर्व इज्जोहवीति स नो भग पुरएता भवेह ॥ ५ ॥ समध्वरायोषसो नमन्त दधिक्रावेव शुचये पदाय । अर्वाचीनं वसुविदं भगं नो

रथमिवाश्वा वाजिन आवहन्तु ।। ६ ।। अश्वावतीर्गोमतीर्न उषासो वीरवतीः सदमुच्छन्तु भद्राः । घृतं दुहाना विश्वतः प्रपीता यूयं पात स्वस्तिभिः सदा नः ।। ७ ।। यो मामग्ने भागिनं सन्तमथाभागं चिकीर्षति । अभागमग्ने तं कृधि मामग्ने भागिनं कुरु ।। (ऋ. ७/४१)

संसमिति चतुर्ऋचस्य सूक्तस्य आङ्गिरसः संवनन ऋषिः । अनुष्टुप् छन्दः, तृतीया त्रिष्टुप् । आद्याया अग्निः, ततस्तिसृणां सञ्ज्ञानं देवता ।।

संसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ । इळस्पदे समिध्यसे स नो वसून्याभर ।। १ ।। सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम् । देवा भागं यथा पूर्वे सञ्जानाना उपासते ।। २ ।। समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम् । समानं मन्त्रमभिमन्त्रये वः समानेन वो हविषा जुहोमि ।। ३ ।। समानी व आकूतिः समाना हृदयानि वः । समानमस्तु वो मनो यथा वः सुसहासति ।। ४ ।। (ऋ. १०/१९१)

## रात्रीसूक्तम्

रात्री व्यख्यदित्यष्टर्चस्य सूक्तस्य सौभरः कुशिक ऋषिः, [भारद्वाजी रात्रिर्वा ऋषिः] । गायत्री छन्दः । रात्रिर्देवता ।।

रात्री व्यख्यदायती पुरुत्रा देव्य१क्षभिः । विश्वा अधि श्रियोऽधित ।। १ ।। ओर्वप्रा अमर्त्या निवतो देव्यु१द्वतः । ज्योतिषा बाधते

तमः ।। २ ।। निरु स्वसारमस्कृतोषसं देव्यायती । अपेदु हासते
तमः ।। ३ ।। सा नो अद्य यस्या वयं नि ते यामन्नविक्ष्महि ।
वृक्षे न वसतिं वयः ।। ४ ।। नि ग्रामासो अविक्षत नि पद्वन्तो
नि पक्षिणः । नि श्येनासश्चिदर्थिनः ।। ५ ।। यावया वृक्यं१वृकं
यवय स्तेनमूर्म्ये । अथा नः सुतरा भव ।। ६ ।। उप मा
पेपिशत्तमः कृष्णं व्यक्तमस्थित । उष ऋणेव यातय ।। ७ ।।
उप ते गा इवाकरं वृणीष्व दुहितर्दिवः । रात्रि स्तोमं न जिग्युषे
।। ८ ।।

*परिशिष्टम्-*

आ रात्रि पार्थिवं रजः पितरः प्रायु धामभिः । दिवः सदांसि बृहती वितिष्ठस आ त्वेषं वर्तते तमः ।। १ ।। ये ते रात्रि[1] नृचक्षसो युक्तासो नवतिर्नव । अशीतिः सन्त्वष्टा उतोते सप्त सप्ततीः । २ ।। रात्रीं प्रपद्ये जननीं सर्वभूतनिवेशनीम् । भद्रां भगवतीं कृष्णां विश्वस्य जगतो निशाम् ।। ३ ।। संवेशिनीं संयमिनीं ग्रहनक्षत्रमालिनीम् । प्रपन्नोऽहं शिवां रात्रीं भद्रे पारमशीमहि भद्रे पारमशीमह्यों नमः ।। ४ ।। स्तोष्यामि प्रयतो देवीं शरण्यां बह्वृचप्रियाम् । सहस्रसंमितां दुर्गां जातवेदसे सुनवाम सोमम् ।। ५ ।। शान्त्यर्थं तद् द्विजातीनामृषिभिः

१. रात्री

सोमपाश्रिताः । ऋग्वेदे त्वं समुत्पन्नाऽरातीयतो नि दहाति वेदः ।। ६ ।। ये त्वां देवि प्रपद्यन्ति ब्राह्मणा हव्यवाहनीम् । अविद्या बहुविद्या वा स नः पर्षदतिदुर्गाणि विश्वा ।। ७ ।। ये अग्निवर्णां शुभां सौम्यां कीर्तयिष्यन्ति ये द्विजाः । तांस्तारयति[2] दुर्गाणि नावेव सिन्धुं दुरितात्यग्निः ।। ८ ।। दुर्गेषु विषमे घोरे सङ्ग्रामे रिपुसङ्कटे । अग्निचोरनिपातेषु दुष्टग्रहनिवारणि[3] ।। ९ ।। दुर्गेषु विषमेषु त्वं सङ्ग्रामेषु वनेषु च । मोहयित्वा प्रपद्यन्ते तेषां मे अभयं कुरु तेषां मे अभयं कुरु[4] ।। १० ।। केशिनीं सर्वभूतानां पञ्चमीति च नाम च । सा मां समा निशा देवी सर्वतः परिरक्षतु (सर्वतः परिरक्षत्वों नमः) ।। ११ ।। तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् । दुर्गां देवीं शरणमहं प्रपद्ये सुतरसि तरसे नमः सुतरसि तरसे नमः ।। १२ ।। दुर्गा दुर्गेषु स्थानेषु शं नो देवीरभिष्टये । य इमं दुर्गास्तवं पुण्यं रात्रौरात्रौ सदा पठेत् ।। १३ ।। रात्रिः कुशिकसोभरो रात्रिर्वा भारद्वाजी रात्रिस्तवो गायत्री । रात्रीसूक्तं जपेन्नित्यं तत्कालमुपपद्यते ।। १४ ।। उलूकयातुं शुशुलूकयातुं जहि श्वयातुमुत कोकयातुम् । सुपर्णयातुमुत गृध्रयातुं दृषदेव प्रमृण रक्ष इन्द्र ।। १५ ।। पिशङ्गभृष्टिमम्भृणं पिशाचिमिन्द्र सं मृण । सर्वं रक्षो

---

२. तान् तारयति ३. निवारणे ४. कुर्वों नमः

निबर्हय ॥ १६ ॥ हिमस्य त्वा जरायुणा शाले परि व्ययामसि ।
उत हृदो हि नो धियोऽग्निर्ददातु भेषजम् ॥ १७ ॥ शिशीतह्रदो
हि नो धियोऽग्निर्ददातु भेषजम् । अन्तिकामग्निमजनय दूर्वातः
शिशुलागमत् ॥ १८ ॥ अजातपुत्रपक्षाया हृदयं मम दूयते ।
विपुलं वनं बह्वाकाशं चर जातवेदः कामाय ॥ १९ ॥ मां
च रक्ष पुत्रांश्च शरणमभूत्तव । पिङ्गाक्ष लोहितग्रीव कृष्णवर्ण
नमोऽस्तु ते ॥ २० ॥ अस्मान्निबर्हरस्येनां सागरस्योर्मयो यथा ।
इन्द्रः क्षत्रं ददातु वरुणमभिषिश्वतु ॥ २१ ॥ शत्रवो निधनं
यान्तु जय त्वं ब्रह्मतेजसा । कपिलजटीं सर्वभक्षं चाग्निं
प्रत्यक्षदैवतम् ॥ २२ ॥ वरुणं च वशाम्यग्रे मम पुत्रांश्च रक्षतु
[मम पुत्रांश्च रक्षत्वों नमः] ॥ २३ ॥ साग्रं वर्षशतं जीव पिब
खाद च मोद च । दुःखितांश्च द्विजांश्चैव प्रजां च पशु पालय
॥ २४ ॥ यावदादित्यस्तपति यावद्भ्राजति चन्द्रमाः । यावद्वायुः
प्लवायति तावज्जीव जया जय ॥ २५ ॥ येन केन प्रकारेण
को हि नाम नु जीवति । परेषामुपकारार्थं यज्जीवति स जीवति ।
एतां वैश्वानरीं सर्वदेवान्नमोऽस्तु ते ॥ २६ ॥ न चोरभयं न
च सर्पभयं न च व्याघ्रभयं न च मृत्युभयम् । यस्यापमृत्युर्न
च मृत्युः सर्वं लभते सर्वं जयते ॥ २७ ॥ *(ऋ. १०/१२७)*

## अघमर्षणसूक्तम्

ऋतश्चेति तृचस्य सूक्तस्य माधुच्छन्दसोऽघमर्षणो भाववृ(त्तं)त्तिः, अनुष्टुप्।

ऋतञ्च सत्यं चाभीद्धात्तपसोऽध्यजायत । ततो रात्र्यजायत ततः समुद्रो अर्णवः ॥ १ ॥ समुद्रादर्णवादधि संवत्सरो अजायत । अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥ २ ॥ सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीञ्चान्तरिक्षमथो स्वः ॥ ३ ॥ (ऋ. १०/१९०)

## दुर्गासूक्तम्

इन्द्रं मित्रमिति सप्तर्चस्य आङ्गिरसः कुत्सो विश्वेदेवाः, जगती अन्त्या त्रिष्टुप्।

इन्द्रं मित्रं वरुणमग्निमूतये मारुतं शर्धो अदितिं हवामहे । रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥ १ ॥ त आदित्या आ गता सर्वतातये भूत देवा वृत्रतूर्येषु शम्भुवः । रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥ २ ॥ अवन्तु नः पितरः सुप्रवाचना उत देवी देवपुत्रे ऋतावृधा । रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥ ३ ॥ नराशंसं वाजिनं वाजयन्निह क्षयद्वीरं पूषणं सुम्नैरीमहे । रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥ ४ ॥ बृहस्पते सदमिन्नः सुगं कृधि शं योर्यत्ते

मनुर्हितं तदीमहे । रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥ ५ ॥ इन्द्रं कुत्सो वृत्रहणं शचीपतिं काटे निबाह्ळ ऋषिरह्वदूतये । रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥ ६ ॥ देवैर्नो देव्यदितिर्निपातु देवस्त्राता त्रायतामप्रयुच्छन् । तन्नो मित्रो वरुणो मामहन्ता-मदितिः सिन्धुः पृथिवी उत द्यौः ॥ ७ ॥ (ऋ. १/१०६)

## सरस्वतीसूक्तम्

इयमददादिति चतुर्दशर्चस्य सूक्तस्य बार्हस्पत्यो भारद्वाजः सरस्वती, गायत्री आद्यास्तिस्रस्त्रयोदशी च जगत्योऽन्त्या त्रिष्टुप् ।

इयमददाद्रभसमृणच्युतं दिवोदासं वध्र्यश्वाय दाशुषे । या शश्वन्तमाचखादावसं पणिं ता ते दात्राणि तविषा सरस्वति ॥ १ ॥ इयं शुष्मेभिर्बिसखा इवारुजत्सानु गिरीणां तविषेभि-रूर्मिभिः । पारावतघ्नीमवसे सुवृक्तिभिः सरस्वतीमा विवासेम धीतिभिः ॥ २ ॥ सरस्वति देवनिदो नि बर्हय प्रजां विश्वस्य बृसयस्य मायिनः । उत क्षितिभ्योऽवनीरविन्दो विषमेभ्यो अस्रवो वाजिनीवति ॥ ३ ॥ प्रणो देवी सरस्वती वाजेभिर्वाजिनीवती । धीनामवित्र्यवतु ॥ ४ ॥ यस्त्वा देवि सरस्वत्युपब्रूते धने हिते । इन्द्रं न वृत्रतूर्ये ॥ ५ ॥ त्वं देवि सरस्वत्यवा वाजेषु वाजिनि । रदा पूषेव नः सनिम् ॥ ६ ॥

उत स्या नः सरस्वती घोरा हिरण्यवर्तनिः । वृत्रघ्नी वष्टि सुष्टुतिम् ॥ ७ ॥ यस्या अनन्तो अह्रुतस्त्वेषश्चरिष्णुरर्णवः । अमश्चरति रोरुवत् ॥ ८ ॥ सा नो विश्वा अति द्विषः स्वसॄरन्या ऋतावरी । अतन्नहेव सूर्यः ॥ ९ ॥ उत नः प्रिया प्रियासु सप्तस्वसा सुजुष्टा । सरस्वती स्तोम्या भूत् ॥ १० ॥ आपप्रुषी पार्थिवान्युरु रजो अन्तरिक्षम् । सरस्वती निदस्पातु ॥ ११ ॥ त्रिषधस्था सप्तधातुः पञ्च जाता वर्धयन्ती । वाजेवाजे हव्याभूत् ॥ १२ ॥ प्र या महिम्ना महिनासु चेकिते द्युम्नेभिरन्या अपसामपस्तमा । रथ इव बृहती विभ्वने कृतोपस्तुत्या चिकितुषा सरस्वती ॥ ॥ १३ ॥ सरस्वत्यभि नो नेषि वस्यो माप स्फरीः पयसा मा न आ धक् । जुषस्व नः सख्या वेश्या च मा त्वत् क्षेत्राण्यरणानि गन्म ॥ १४ ॥ (ऋ. ६/६१)

पावकान इति तृचस्य वैश्वामित्रो मधुच्छन्दाः सरस्वती गायत्री ।

पावका नः सरस्वती वाजेभिर्वाजिनीवती । यज्ञं वष्टु धियावसुः ॥ १ ॥ चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् । यज्ञं दधे सरस्वती ॥ २ ॥ महो अर्णः सरस्वती प्र चेतयति केतुना । धियो विश्वा वि राजति ॥ ३ ॥ (ऋ. १/३/१०-१२)

या गुङ्गूरिति गृत्समदो भार्गवः शौनको, लिङ्गोक्ताः अनुष्टुप् ।

या गुङ्गूर्या सिनीवाली या राका या सरस्वती । इन्द्राणीमह्व ऊतये वरुणानीं स्वस्तये ॥ (ऋ. २-३२-८)

## अग्निसूक्तम्

इमं स्तोममिति षोडशर्चस्य सूक्तस्य कुत्सोऽग्निः, पूर्वो देवा इत्यस्य देवा अग्निश्च, तन्नो मित्र इत्यन्त्यार्धर्चस्य मित्रवरुणादितिसिन्धुपृथिवीद्यावो, जगती, अन्त्ये त्रिष्टुभौ ।

इमं स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया । भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव ॥ १ ॥ यस्मै त्वमायजसे स साधत्यनर्वा क्षेति दधते सुवीर्यम् । स तूताव नैनमश्नोत्यंहतिरग्ने सख्ये मा रिषाम वयं तव ॥ २ ॥ शकेम त्वा समिधं साधया धियस्त्वे देवा हविरदन्त्याहुतम् । त्वमादित्याँ आ वह तान् ह्यु१श्मस्यग्ने सख्ये मा रिषामा वयं तव ॥ ३ ॥ भरामेध्मं कृणवामा हवींषि ते चितयन्तः पर्वणा पर्वणा वयम् । जीवातवे प्रतरं साधया धियोऽग्ने सख्ये मा रिषामा वयं तव ॥ ४ ॥ विशां गोपा अस्य चरन्ति जन्तवो द्विपच्च यदुत चतुष्पदक्तुभिः । चित्रः प्रकेत उषसो महाँ अस्यग्ने सख्ये मा रिषामा वयं तव ॥ ५ ॥ त्वमध्वर्युरुत होतासि पूर्व्यः प्रशास्ता पोता जनुषा पुरोहितः । विश्वा विद्वाँ आर्त्विज्या धीर पुष्यस्यग्ने सख्ये मा रिषामा वयं तव ॥ ६ ॥ यो विश्वतः

सुप्रतीकः सदृङ्ङसि दूरे चित् सन्तळिदिवाति रोचसे ।
रात्र्याश्चिदन्धो अति देव पश्यस्यग्ने सख्ये मा रिषामा वयं तव
॥ ७ ॥ पूर्वो देवा भवतु सुन्वतो रथोऽस्माकं शंसो अभ्यस्तु
दूढ्यः । तदा जानीतोत पुष्यता वचोऽग्ने सख्ये मा रिषामा
वयं तव ॥ ८ ॥ वधैर्दुःशंसाँ अप दूढ्यो जहि दूरे वा ये
अन्ति वा के चिदत्रिणः । अथा यज्ञाय गृणते सुगं कृध्यग्ने
सख्ये मा रिषामा वयं तव ॥ ९ ॥ यदयुक्था अरुषा रोहिता
रथे वातजूता वृषभस्येव ते रवः । आदिन्वसि वनिनो
धूमकेतुनाऽग्ने सख्ये मा रिषामा वयं तव ॥ १० ॥ अध स्वनादुत
बिभ्युः पतत्रिणो द्रप्सा यत्ते यवसादो व्यस्थिरन् । सुगं तत्ते
तावकेभ्यो रथेभ्योऽग्ने सख्ये मा रिषामा वयं तव ॥ ११ ।
अयं मित्रस्य वरुणस्य धायसेऽवयातां मरुतां हेळो अद्भुतः ।
मृळा सु नो भूत्वेषां मनः पुनरग्ने सख्ये मा रिषामा वयं तव
॥ १२ ॥ देवो देवानामसि मित्रो अद्भुतो वसुर्वसूनामसि
चारुरध्वरे । शर्मन्त्स्याम तव सप्रथस्तमेऽग्ने सख्ये मा रिषामा
वयं तव ॥ १३ ॥ तत्ते भद्रं यत्समिद्धः स्वे दमे सोमाहुतो
जरसे मृळयत्तमः । दधासि रत्नं द्रविणं च दाशुषेऽग्ने सख्ये मा
रिषामा वयं तव ॥ १४ ॥ यस्मै त्वं सुद्रविणो
ददाशोऽनागास्त्वमदिते सर्वताता । यं भद्रेण शवसा चोदयासि

प्रजावता राधसा ते स्याम ॥ १५ ॥ स त्वमग्ने सौभगत्वस्य विद्वानस्माकमायुः प्र तिरेह देव । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ १६ ॥

(ऋ. १/९४)

## गर्भाधानोपयुक्ता मन्त्राः

विष्णुर्योनिमिति त्वष्टा विष्णुर्वा प्राजापत्यः, आद्याया विष्णुत्वष्टृप्रजापतिधातारः, द्वितीयायाः सिनीवालीसरस्वत्यश्विनः, तृतीयाया अश्विनावनुष्टुप् ।

विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु । आ सिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥ १ ॥ गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति । गर्भं ते अश्विनौ देवावा धत्तां पुष्करस्रजा ॥ २ ॥ हिरण्ययी अरणी यं निर्मन्थतो अश्विना । तं ते गर्भं हवामहे दशमे मासि सूतवे ॥ ३ ॥

(ऋ. १०/१८४)

[परिशिष्टम्-

नेजमेषेति त्वष्टा विष्णुरनुष्टुप् ।

नेजमेष परा पत सुपुत्रः पुनरा पत । अस्यै मे पुत्रकामायै गर्भमा धेहि यः पुमान् ॥ १ ॥ यथेयं पृथिवी मह्युत्ताना गर्भमादधे । एवं तं गर्भमा धेहि दशमे मासि सूतवे ॥ २ ॥ विष्णोः श्रेष्ठेन रूपेणास्यां नार्यां गवीन्याम् । पुमांसं पुत्राना धेहि दशमें मासि सूतवे ॥ ३ ॥]

प्रजापते हिरण्यगर्भः प्राजापत्यः प्रजापतिस्त्रिष्टुप् ।

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव । यत् कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥

(ऋ. १०-१२१-१०)

अपनः शोशुचदघं ... । [15 पुटे]
याः फलिनीर्या ... । [11 पुटे]
[पुण्याहप्रकरणे]

वधेन दस्युमिति षण्णां आत्रेयो वसुश्रुतोऽग्निस्त्रिष्टुप् ।

वधेन दस्युं प्र हि चातयस्व वयः कृण्वानस्तन्वे३स्वायै । पिपर्षि यत् सहसस्पुत्र देवान् त्सो अग्ने पाहि नृतम वाजे अस्मान् ॥ १ ॥ वयं ते अग्न उक्थैर्विधेम वयं हव्यैः पावक भद्रशोचे । अस्मे रयिं विश्ववारं समिन्वास्मे विश्वानि द्रविणानि धेहि ॥ २ ॥ अस्माकमग्ने अध्वरं जुषस्व सहसः सूनो त्रिषधस्थ हव्यम् । वयं देवेषु सुकृतः स्याम शर्मणा नस्त्रिवरूथेन पाहि ॥ ३ ॥

(ऋ. ५/४/६-११)

विश्वानि नो दुर्गहा ... । [अग्निमुखप्रकरणे] [13 पुटे]

यस्त्वा हृदा कीरिणा ।
यस्मै त्वं सुकृते ... ।
[पुण्याहप्रकरणे] [13 पुटे]

अग्निस्तुविश्रवस्तममिति द्वयोर्वसूयवोऽग्निरनुष्टुप् ।

अग्निस्तुविश्रवस्तमं तुविब्रह्माणमुत्तमम् । अतूर्तं श्रावयत्पतिं पुत्रं ददाति दाशुषे ।। १ ।। अग्निर्ददाति सत्पतिं सासाह यो युधा नृभिः । अग्निरत्यं रघुष्यदं जेतारमपराजितम् ।। २ ।।
(ऋ. ५/२५/५, ६)

उदीर्ष्वेति द्वयोः सूर्यासावित्री सूर्यासावित्री (नृणां विवाहमन्त्राः आशीःप्रायाः) आद्या त्रिष्टुबन्त्यानुष्टुप् ।

उदीर्ष्वातः पतिवती ह्येषा विश्वावसुं नमसा गीर्भिरीळे । अन्यामिच्छ पितृषदं व्यक्तां स ते भागो जनुषा तस्य विद्धि ।। १ ।। उदीर्ष्वातो विश्वावसो नमसेळामहे त्वा ।। अन्यामिच्छ प्रफर्व्यं सं जायां पत्या सृज ।। २ ।। (ऋ. १०-८५/२१, २२)

सूर्यो न इति पञ्चर्चस्य सूक्तस्य चक्षुः सौर्यः सूर्यो गायत्री (द्वितीया स्वराट्)

सूर्यो नो दिवस्पातु वातो अन्तरिक्षात् । अग्निर्नः पार्थिवेभ्यः ।। १ ।। जोषा सवितर्यस्य ते हरः शतं सवाँ अर्हति । पाहि नो दिद्युतः पतन्त्याः ।। २ ।। चक्षुर्नो देवः सविता चक्षुर्न उत पर्वतः । चक्षुर्धाता दधातु नः ।। ३ ।। चक्षुर्नो धेहि चक्षुषे चक्षुर्विख्यै तनूभ्यः । सं चेदं वि च पश्येम ।। ४ ।। सुसंदृशं त्वा वयं प्रति पश्येम सूर्य । वि पश्येम नृचक्षसः ।। ५ ।। (ऋ. १०-१५८)

## अनवलोभन मन्त्राः

ऋग्वेदे परिशिष्टे- प्रजावदाख्यं सूक्तम्। (ऋ. ५-८७ सूक्तानन्तरम्।)

आ ते गर्भो योनिमैतु पुमान् बाण इवेषुधिम्। आ वीरो जायतां पुत्रस्ते दशमास्यः ॥ १ ॥ करोमि ते प्राजापत्यमा गर्भो योनिमैतु ते। अनूनः पूर्णो जायतामश्लोणोऽपिशाचधीतः ॥ २ ॥ पुमांस्ते पुत्रो नारि तं पुमाननुजायताम्। तानि भद्राणि बीजान्यृषभा जनयन्ति नौ ॥ ३ ॥ यानि भद्राणि बीजान्यृषभा जनयन्ति नः। तैस्त्वं पुत्रान् विन्दस्व सा प्रसूर्धेनुका भव ॥ ४ ॥ कामः समृद्ध्यतां मह्यमपराजितमेव मे। यं कामं कामये देव तं मे वायो समर्द्धय ॥ ५ ॥ अग्निरैतु प्रथमो देवतानां सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात्। तदयं राजा वरुणोऽनुमन्यतां यथेयं स्त्री पौत्रमघं न रोदात् ॥ ६ ॥ इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः। अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभि प्रबुद्ध्यतामियम् ॥ ७ ॥ मा ते गृहे निशि घोष उत्थादन्यत्र त्वद्रुदत्यः सं विशन्तु। मा त्वं विकेश्युर आवधिष्ठा जीवपत्नी पतिलोके विराज पश्यन्ती प्रजां सुमनस्यमाना ॥ ८ ॥ अप्रजस्तां पौत्रमृत्युं पाप्मानमुत वाघम्। शीर्ष्णः स्रजमिवोन्मुच्य द्विषद्भ्यः प्रतिमुञ्चामि पाशम् ॥ ९ ॥ देवकृतं

ब्राह्मणं कल्पमानं तेन हन्मि योनिषदः पिशाचान् । क्रव्यादो मृत्यूनधरान् पातयामि दीर्घमायुस्तव जीवन्तु पुत्राः ॥ १० ॥

यत्ते सुशीम इति मन्त्रस्य हिरण्यगर्भः प्रजापतिरनुष्टुप् ।

यत्ते सुशीमे हृदये हितमन्तः प्रजापतौ । मन्येहं मां तद्विद्वांसं माहं पौत्रमघन्नियाम् ॥

## सीमन्तोन्नयन मन्त्राः

धाता ददातु दाशुष इत्यादि म त्रद्वयस्य हिरण्यगर्भो धातानुष्टुप् ।

धाता ददातु दाशुषे प्राचीं जीवातुमक्षिताम् । वयं देवस्य धीमहि सुमतिं वाजिनीवतः ॥ १ ॥ धाता प्रजानामुत राय ईशे धातेदं विश्वं भुवनं जजान । धाता कृष्टीरनिमिषाभिचष्टे धात्रा इद्धव्यं घृतवज्जुहोत ॥ २ ॥ *(परिशिष्टे २·३२ सूक्तानन्तरम्)*

राकामहमिति द्वयोर्गृत्समदो राका जगती ।

राकामहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना । सीव्यत्वपः सूच्याच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यम् ॥ १ ॥ यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि । ताभिर्नो अद्य सुमना ऽउपागहि सहस्रपोषं सुभगे रराणा ॥ २ ॥ *(ऋ. २-३२-४, ५)*

नेजमेष परापत ... । *(गर्भाधानप्रकरणे ३ ऋचः)* *[59पुटे]*

**प्रजापते ... ।** *(गर्भाधानप्रकरणे १ ऋक्) [60 पुटे]*

अर्वाचीति वामदेवो गौतमः सीतानुष्टुप् ।

**अर्वाची सुभगे भव सीते वन्दामहे त्वा । यथा नः सुभगाससि यथा नः सुफलाससि ॥** *(ऋ. ४-५७-६)*

**पुष्पावतीः प्रसूवतीः फलिनीरफला उत । अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः ॥** *(तै. सं. ४-२-६-३)*

## जातकर्ममन्त्राः

प्र ते ददामीति हिरण्यगर्भः सविता त्रिष्टुप् ।

**प्र ते ददामि मधुनो घृतस्य वेदं सवित्रा प्रसूतं मघोनाम् । आयुष्मान् गुप्तो देवताभिः शतं जीव शरदो लोके अस्मिन् ॥**

मेधान्ते हिरण्यगर्भः सरस्वत्यश्विनावनुष्टुप् ।

**मेधान्ते देवः सविता मेधां देवी सरस्वती । मेधान्ते अश्विनौ देवावा धत्तां पुष्करस्रजौ ॥** *(कृष्णयजुर्वेदे एकाग्निकाण्डे द्वितीयप्रश्ने)*

**इन्द्र श्रेष्ठानि ... ।** *(सन्ध्यावन्दनप्रकरणे) [3 पुटे]*

अस्मे प्रयन्धि विश्वामित्रः (घोर आङ्गिरसः) इन्द्रस्त्रिष्टुप् ।

**अस्मे प्र यन्धि मघवन्नृजीषिन्निन्द्र रायो विश्ववारस्य भूरेः । अस्मे शतं शरदो जीवसेधा अस्मे वीराञ्छश्वत इन्द्रन् शिप्रिन् ॥**
*(ऋ. ३-३६-१०)*

## अन्नप्राशनमन्त्राः

अन्नपत इत्यस्य नलकूबरो (अग्निर्ऋषिः) ऽन्नपतिरुपरिष्टाद्बृहती ।

अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः । प्र प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे ॥ *(तै. सं. ४-२-३-१)*

## चूडाकर्ममन्त्राः

अग्न आयूंषीति तिसृणां शतं वैखानसाः ऋषयः गायत्री छन्दः अग्निः पवमानो देवता ॥

अग्न आयूंषि पवस आ सुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ॥ १ ॥ अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः । तमीमहे महागयम् ॥ २ ॥ अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधद्रयिं मयिपोषम् ॥ ३ ॥

*(ऋ. ९-६६-१९, २०, २१)*

प्रजापते नत्वत् ... । *(गर्भाधानप्रकरणे)* *[60पुटे]*

उष्णेन वायवुदकेनेह्यदितिः केशान् वपतु । आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे । ज्योक्च सूर्यं दृशे ॥ येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् । तेन ब्रह्माणो वपते दमस्यायुष्माञ्जरदष्टिर्यथासत् ॥ येन धाता (पूषा) बृहस्पतेरग्नेरिन्द्रस्य चायुषे वपत् । तेनास्यायुषे वपसोश्लोक्याय स्वस्तये । (तेन त आयुषे वपामि सुश्लोक्याय स्वस्तये) येन

भूयश्च रात्ययं (रात्र्यां) ज्योक्च पश्यति सूर्यम् । तेनास्यायुषे वपसोश्लोक्याय स्वस्तये ।। (तेन त आयुषे वपामि सुश्लोक्याय स्वस्तये ।) यत्क्षुरेण मर्चयता सुपेशसा वप्त्रा (वप्ता) वपसि केशान् । शुन्धि शिरो मास्यायुः प्रमोषीः ।।

*(कृष्णयजुर्वेदे एकाग्निकाण्डे द्वितीयप्रश्ने)*

## उपनयनोपयुक्ताः मन्त्राः

युवं वस्त्राणि दीर्घतमा औचथ्यो मित्रावरुणौ त्रिष्टुप् ।

युवं वस्त्राणि पीवसा वसाथे युवोरच्छिद्रा मन्तवो ह सर्गाः । अवातिरतमनृतानि विश्व ऋतेन मित्रावरुणा सचेथे ।।

*(ऋ. १-१५२-१)*

यज्ञोपवीतं परब्रह्म परमात्मा त्रिष्टुप् ।

यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत् सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ।।

**अग्न आयूंषि ... ।** *(चौलप्रकरणे ३ ऋचः) [65 पुटे]*

**प्रजापते ... ।** *(गर्भाधानप्रकरणे) [60 पुटे]*

तत्सवितुरात्रेयः श्यावाश्वः सवितानुष्टुप् ।

तत् सवितुर्वृणीमहे वयं देवस्य भोजनम् । श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि ।।

*(ऋ. ५-८२-१)*

**देवस्य त्वा ... ।** *(पुण्याहवाचनप्रकरणे) [9 पुटे]*

युवा सुवासः गाथिनो विश्वामित्रो यूपस्त्रिष्टुप् ।

**युवा सुवासाः परिवीत आगात् स उ श्रेयान् भवति जायमानः । तं धीरासः कवय उन्नयन्ति स्वाध्यो३ मनसा देवयन्तः ॥**

*(ऋ. ३-८-४)*

अग्नये समिधमित्यस्य हिरण्यगर्भोऽग्निर्बृहती ॥

**अग्नये समिधमहार्षं बृहते जातवेदसे । तया त्वमग्ने वर्धस्व समिधा ब्रह्मणा वयम् ॥**

मयिमेधामिति षण्णां हिरण्यगर्भऋषिः गायत्री छन्दः पूर्वेषां त्रयाणां अग्नीन्द्रसूर्या देवताः उत्तरत्रयाणामग्निर्देवता ॥

**मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु ॥**
**मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु ॥**
**मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु ॥**

*(तै. सं. ३-३-१-७)*

**यत्ते अग्ने तेजस्तेनाहं तेजस्वी भूयासम् ॥**
**यत्ते अग्ने वर्चस्तेनाहं वर्चस्वी भूयासम् ॥**
**यत्ते अग्ने हरस्तेनाहं हरस्वी भूयासम् ॥**

**मानस्तोके ... ।** *(पञ्चगव्यमेलनमन्त्रेषु)* [20 पुटे]

मम व्रते इत्यस्य प्रजापतिस्त्रिष्टुप् ।

**मम व्रते हृदयं ते दधामि मम चित्तमनुचित्तं ते अस्तु । मम वाचमेकव्रतो जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यम् ।**

इयं दुरुक्तादिति द्वयोर्वामदेवो मेखला त्रिष्टुप् ।

इयं दुरुक्तात् परिबाधमाना शर्म वरूथं पुनती न आगात् ।
प्राणापानाभ्यां बलमाभरन्ती प्रिया देवानां सुभगा मेखलेयम् ॥
ऋतस्य गोप्त्री तपसः परस्पी घ्नती रक्षः सहमाना अरातीः ॥
सा नः समन्तमनुपरेहि भद्रया भर्तारस्ते मेखले मारिषाम ॥

स्वस्तिनो मिमीताम् ... । *(स्वस्तिसूक्ते) [38 पुटे]*

**[अनुप्रवचनीयमन्त्राः]**

सदसस्पतिमिति काण्वो मेधातिथिः सदसस्पतिर्गायत्री ।

सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधाम-
यासिषम् ॥ *(ऋ. १-१८-६)*

**[मेधाजननमन्त्राः]**

सुश्रवः सुश्रवा असि यथात्वं सुश्रवः सुश्रवा अस्येवं मां सुश्रवः सौश्रवसं कुरु ॥ यथा त्वं देवानां यज्ञस्य निधिपोऽस्येवमहं मनुष्याणां वेदस्य निधिपो भूयासम् ॥

मेधां मह्यमङ्गिरसो मेधां सप्त ऋषयो ददुः । मेधामिन्द्रश्चाग्निश्च मेधां धाता ददातु ते ॥ १ ॥ मेधां ते वरुणो राजा मेधां देवी सरस्वती । मेधां ते अश्विनौ देवावा धत्तां पुष्करस्रजा ॥ २ ॥ या मेधा अप्सरस्सु गन्धर्वेषु च यन्मनः । दैवी या मानुषी मेधा सा मामा विशतादिमाम् ॥ ३ ॥ यन्मे नोक्तं तद्रमतां शकेयं

यदनुब्रुवे । निशामतं नि शामहै मयि व्रतं सह व्रतेषु भूयासं ब्रह्मणा सं गमेमहि ॥ ४ ॥ शरीरं मे विचक्षणं वाङ्मे मधुमद्दुहाम् । अवृद्धमहमसौ सूर्यो ब्रह्मणानी स्थः श्रुतं मे मा प्र हासीः ॥ ५ ॥ मेधां देवी मनसा रेजमानां गन्धर्व जुष्टां प्रति नो जुषस्व । मह्यं मेधां वद मह्यं श्रियं वद मेधावी भूयासमजराजरिष्णु ॥ ६ ॥ सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिषम् ॥ ७ ॥ यां मेधां देवगणाः पितरश्चोपासते । तया मामद्य मेधयाग्ने मेधाविनं कुरु ॥ ८ ॥ मेधाव्य१हं सुमनाः सुप्रतीकः श्रद्धामनाः सत्यमतिः सुशेवः । महायशा धारयिष्णुः प्रवक्ता भूयासमस्मै शरया प्रयोगे ॥ ९ ॥

*[ऋग्वेदपरिशिष्टे १०/१५१ सूक्तस्यानन्तरम्-]*

## समावर्तनोपयुक्ताः मन्त्राः

आयुष्यमिति सूक्तस्य सनकसनन्दनसनातनादयः ऋषयः हिरण्यं देवता आद्याश्चतस्रोऽनुष्टुभः पञ्चमी त्रिष्टुप् सप्तम्यतिशक्वरी अष्टमीनवम्यौ त्रिष्टुभौ दशम्यनुष्टुबेकादशी पङ्क्तिः ॥

आयुष्यं वर्चस्यं रायस्पोषमौद्भिदम् । इदं हिरण्यं वर्चस्वज्जैत्रायाविशतादिमाम् ॥ १ ॥ उच्चैर्वाजि पृतनाषाट् सभासाहं धनञ्जयम् । सर्वाः समग्रा ऋद्धयो हिरण्येऽस्मिन् समाहिताः ॥ २ ॥ शुनमहं हिरण्यस्य पितुर्नामेव जग्रभ । तेन मां सूर्यत्वचमकरं पूरुषु प्रियम् ॥ ३ ॥ सम्राजं च विराजं चाभिष्टिर्या

च मे ध्रुवा । लक्ष्मी राष्ट्रस्य या मुखे तया मामिन्द्र सं सृज
॥ ४ ॥ अग्नेः प्रजातं परि यद्धिरण्यममृतं यज्ञे अधि मर्त्येषु ।
य एनद्वेद स इदेनमर्हति जरामृत्युर्भवति यो बिभर्ति ॥ ५ ॥
यद्वेद राजा वरुणो यदु देवी सरस्वती । इन्द्रो यद्वृत्रहा वेद
तन्मे वर्चस आयुषे ॥ ६ ॥ न तद्रक्षांसि न पिशाचाश्चरन्ति
देवानामोजः प्रथमजं ह्ये३तत् । यो बिभर्ति दाक्षायणा हिरण्यं
स देवेषु कृणुते दीर्घमायुः स मनुष्येषु कृणुते दीर्घमायुः ॥ ७ ॥
यदाबध्नन् दाक्षायणा हिरण्यं शतानीकाय सुमनस्यमाना । तन्न
आ बध्नामि शतशारदायायुष्मान् जरदष्टिर्यथासत् ॥ ८ ॥
घृतादुर्लुप्तं मधुमत्सुवर्णं धनञ्जयं धरुणं धारयिष्णु । ऋणक्
सपत्नादधरांश्च कृण्वदारोह मां महते सौभगाय ॥ ९ ॥ प्रियं
मा कुरु देवेषु प्रियं राजसु मा कुरु । प्रियं विश्वेषु गोप्त्रेषु
मयि धेहि रुचा रुचम् ॥ १० ॥ अग्निर्येन विराजति सूर्यो येन
विराजति । विराज्येन विराजति तेनास्मान् ब्रह्मणस्पते विराज
समिधं कुरु ॥ ११ ॥ *(ऋ. परिशिष्टे- १०-१२८ सूक्तानन्तरम् ।)*

ममाग्ने वर्च इति नवर्चस्य सूक्तस्य आङ्गिरसः विहव्यो विश्वेदेवास्त्रिष्टुबन्त्या जगती ।

ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तन्वं पुषेम । मह्यं नमन्तां
प्रदिशश्चतस्त्रस्त्वयाध्यक्षेण पृतना जयेम ॥ १ ॥ मम देवा विहवे

सन्तु सर्व इन्द्रवन्तो मरुतो विष्णुरग्निः । ममान्तरिक्षमुरुलोकमस्तु मह्यं वातः पवतां कामे अस्मिन् ॥ २ ॥ मयि देवा द्रविणमा यजन्तां मय्याशीरस्तु मयि देवहूतिः ॥ दैव्या होतारो वनुषन्त पूर्वेऽरिष्टाः स्याम तन्वा सुवीराः ॥ ३ ॥ मह्यं यजन्तु मम यानि हव्याऽऽकूतिः सत्या मनसो मे अस्तु । एनो मा नि गां कतमच्चनाहं विश्वे देवासो अधि वोचता नः ॥ ४ ॥ देवीः षळुर्वीरुरु नः कृणोत विश्वे देवास इह वीरयध्वम् । मा हास्महि प्रजया मा तनूभिर्मा रधाम द्विषते सोम राजन् ॥ ५ ॥ अग्ने मन्युं प्रतिनुदन् परेषामदब्धो गोपाः परि पाहि नस्त्वम् । प्रत्यञ्चो यन्तु निगुतः पुनस्ते३मैषां चित्तं प्रबुधां वि नेशत् ॥ ६ ॥ धाता धातॄणां भुवनस्य यस्पतिर्देवं त्रातारमभिमातिषाहम् । इमं यज्ञमश्विनोभा बृहस्पतिर्देवाः पान्तु यजमानं न्यर्थात् ॥ ७ ॥ उरुव्यचा नो महिषः शर्म यंसदस्मिन् हवे पुरुहूतः पुरुक्षुः । स नः प्रजायै हर्यश्व मृळयेन्द्र मा नो रीरिषो मा परा दाः ॥ ८ ॥ ये नः सपत्ना अप ते भवन्त्विन्द्राग्निभ्यामव बाधामहे तान् । वसवो रुद्रा आदित्या उपरिस्पृशं मोग्रं चेत्तारमधिराजमक्रन् ॥ ९ ॥

*परिशिष्टे-*

अर्वाञ्चमिन्द्रममुतो हवामहे यो गोजिद्धनजिदश्वजिद्यः । इमं नो यज्ञं (हव्यं) विहवे जुषस्वास्य कुल्मो हरिवो मेदिनं त्वा ॥
(ऋ. १०-१२८)

## विवाहोपयुक्ताः मन्त्राः

इन्द्राणीमिन्द्र इन्द्रः पङ्क्तिः ।

इन्द्राणीमासु नारिषु सुभगामहमश्रवम् । न ह्यस्या अपरं चन जरसा मरते पतिर्विश्वस्मादिन्द्र उत्तरः ॥ (ऋ. १०-८६-११)

अनृक्षरा इति सूर्या सावित्री । नृणां विवाहमन्त्राः आशीः प्रायाः । त्रिष्टुप् ।

अनृक्षरा ऋजवः सन्तु पन्था येभिः सखायो यन्ति नो वरेयम् । समर्यमा सं भगो नो निनीयात् सं जास्पत्यं सुयममस्तु देवाः ॥
(ऋ. १०-८५-२३)

हिङ्कृण्वती दीर्घतमा औचथ्यः विश्वेदेवास्त्रिष्टुप् ।

हिङ्कृण्वती वसुपत्नी वसूनां वत्समिच्छन्ती मनसाभ्यागात् । दुहामश्विभ्यां पयो अघ्न्येयं सा वर्धतां महते सौभगाय ॥
(ऋ. १-१६४-२७)

समिद्धस्य गाथिनो विश्वामित्रो यूपस्त्रिष्टुप् ।

समिद्धस्य श्रयमाणः पुरस्ताद्ब्रह्म वन्वानो अजरं सुवीरम् । आरे अस्मदमतिं बाधमान उच्छ्रयस्व महते सौभगाय ॥
(ऋ. ३-८-२)

वनस्पते गाथिनो विश्वामित्रो व्रश्चनस्त्रिष्टुप् ।

**वनस्पते शतवल्शो विरोह सहस्रवल्शा विवयं रुहेम । यं त्वामयं स्वधितिस्तेजमानः प्रणिनाय महते सौभगाय ॥** *(ऋ. ३-८-११)*

इन्दुर्देवानामिति वसिष्ठः इन्द्रप्रमतिः पवमानः सोमस्त्रिष्टुप् ।

**इन्दुर्देवानामुप सख्यमायन् त्सहस्रधारः पवते मदाय । नृभिः स्तवानो अनु धाम पूर्वमगन्निन्द्रं महते सौभगाय ॥** *(ऋ. ९-९७-५)*

अस्य पिब स्थौरोऽग्नियुतः । इन्द्रस्त्रिष्टुप् ।

**अस्य पिब क्षुमतः प्रस्थितस्येन्द्र सोमस्य वरमा सुतस्य । स्वस्तिदा मनसा मादयस्वार्वाचीनो रेवते सौभगाय ॥** *(ऋ. १०-११६-२)*

**घृतादुर्लुसं मधुमत्सुवर्णं धनञ्जयं धरुणं धारयिष्णु । ऋणक्सपत्नादधरांश्च कृण्वदारोह मां महते सौभगाय ॥** *(ऋ. परिशिष्टे - १०-१२८ सूक्तानन्तरम्)*

कन्यावारेति आत्रेयी अपालेन्द्रः पङ्क्तिः ।

**कन्या३वारवायती सोममपि स्रुताविदत् । अस्तं भरन्त्यब्रवीदिन्द्राय सुनवै त्वा शक्राय सुनवै त्वा ॥** *(ऋ. ८-९१-१)*

प्रसुग्मन्तेति ऐलूषः कवष इन्द्रो जगती ।

**प्र सु ग्मन्ता धियसानस्य सक्षणिर्वरेभिर्वराँ अभि षु प्रसीदतः । अस्माकमिन्द्र उभयं जुजोषति यत्सोम्यस्यान्धसो बुबोधति ॥** *(ऋ. १०-३२-१)*

अहं वर्ष्मेत्यस्य वामदेवो विष्टरोऽनुष्टुप् ।

अहं वर्ष्म सजातानां विद्युतामिव सूर्यः । इदं तमधि तिष्ठामि यो मा कश्चाभिदासति ॥ (ब्र. समुच्चये)

दधिक्राव्णो ... । (पूजाप्रकरणे) [8 पुटे]

माता रुद्राणामित्यस्य भार्गवो जमदग्निर्गौस्त्रिष्टुप् ।

माता रुद्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य नाभिः । प्र नु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट ॥

(ऋ. ८-१०१-१५)

अघोरचक्षुः सावित्री सूर्या सूर्या सावित्री त्रिष्टुप् ।

अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः । वीरसूर्देवकामा स्योना शं नो भव द्विपदे शं चतुष्पदे ॥

(ऋ. १०-८५-४४)

क इदं कस्मा अदात्कामः कामायादात्कामो दाता कामः प्रतिग्रहीता कामं समुद्रमाविश कामेन त्वा प्रतिगृह्णामि कामैतत्ते वृष्टिरसि द्यौस्त्वा ददातु पृथिवी प्रतिगृह्णातु ॥ (ब्र. समुच्चये)

अग्न आयूंषि ... । (चौलप्रकरणे) [65 पुटे]

त्वमर्यमा आत्रेयो वसुश्रुतोऽग्निस्त्रिष्टुप् ।

त्वमर्यमा भवसि यत्कनीनां नाम स्वधावन् गुह्यं बिभर्षि । अञ्जन्ति मित्रं सुधितं न गोभिर्यद्दम्पती समनसा कृणोषि ॥

(ऋ. ५-३-२)

**प्रजापते ... ।** *(गर्भाधानप्रकरणे) [60पुटे]*

गृभ्णामि सावित्री सूर्या सूर्या सावित्री त्रिष्टुप् ।

**गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथासः । भगो अर्यमा सविता पुरन्धिर्मह्यं त्वादुर्गार्हपत्याय देवाः ।।**

*(ऋ. १०-८५-३६)*

अर्यमणं नु वामदेवोऽर्यमाग्निरनुष्टुप् ।

**अर्यमणं नु देवं कन्या अग्निमयक्षत । स इमां देवो अर्यमा प्रेतो मुञ्चातु नामुत ।।** *(प्रयोगरत्ने)*

वरुणं नु वामदेवो वरुणोऽग्निरनुष्टुप् ।

**वरुणं नु देवं कन्या अग्निमयक्षत । स इमां देवो वरुणः प्रेतु मुञ्चातु नामुत ।।** *(प्रयोगरत्ने)*

पूषणं नु वामदेवः पूषाऽग्निरनुष्टुप् ।

**पूषणं नु देवं कन्या अग्निमयक्षत । स इमां देवः पूषा प्रेतो मुञ्चातु नामुत ।।** *(प्रयोगरत्ने)*

अस्य प्रजावतीति द्वयोः वैवस्वतो मनुः प्रथमायाः यज्ञः यजमानश्च द्वितीयायाः दम्पती गायत्री ।

**अस्य प्रजावती गृहेऽसश्चन्ती दिवेदिवे । इळा धेनुमती दुहे ।। १ ।। या दम्पती समनसा सुनुत आ च धावतः । देवासो नित्ययाशिरा ।। २ ।।** *(ऋ. ८-३१-४,५)*

**नवो नवो भवति ... ।** *(पुण्याहवाचनप्रकरणे) [12पुटे]*

सुमङ्गलीरिति सूर्या सावित्री सूर्यासावित्र्यनुष्टुप् ।

**सुमङ्गलीरियं वधूरिमां समेत पश्यत । सौभाग्यमस्यै दत्त्वायाऽथास्तं वि परेतन ।।** *(ऋ. १०-८५-३३)*

## नवग्रहमन्त्राः

आकृष्णेन हिरण्यस्तूप आङ्गिरसः सविता त्रिष्टुप् ।

**आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च । हिरण्ययेन सविता रथेनाऽऽदेवो याति भुवनानि पश्यन् ।।** *(ऋ. १-३५-२)*

अग्निं दूतमिति काण्वो मेधातिथिरग्निर्गायत्री ।

**अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् ।।** *(ऋ. १-१२-१)*

कद्रुद्रायेति घौरः कण्वो रुद्रो गायत्री ।

**कद्रुद्राय प्रचेतसे मीह्ळुष्टमाय तव्यसे । वोचेम शन्तमं हृदे ।।** *(ऋ. १-४३-१)*

**आप्यायस्व समेतुते ... ।** *(देवपूजाप्रकरणे) [7पुटे]*

अप्सुम इति काण्वों मेधातिथिरापोऽनुष्टुप् ।

**अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा । अग्निं च विश्वशम्भुवमापश्च विश्वभेषजीः ।।** *(ऋ. १-२३-२०)*

गौरीर्मिमायेति दीर्घतमा औचथ्य उमा (विश्वेदेवाः) जगती ।

**गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ।**
**अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥**
*(ऋ. १-१६४-४१)*

अग्निर्मूर्धाङ्गिरसो विरूपोऽङ्गारको (अग्निः) गायत्री ।

**अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपां रेतांसि जिन्वति ॥**
*(ऋ. ८-४४-१६)*

स्योना पृथिवीति काण्वो मेधातिथिः पृथिवी गायत्री ।

**स्योना पृथिवि भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथः ॥**
*(ऋ. १-२२-१५)*

कुमारं मातेति कुमार आत्रेयः स्कन्दः (अग्निः) त्रिष्टुप् ।

**कुमारं माता युवतिः समुब्धं गुहा बिभर्ति न ददाति पित्रे ।**
**अनीकमस्य न मिनज्जनासः पुरः पश्यन्ति निहितमरतौ ॥**
*(ऋ. ५-२-१)*

उद्बुध्यध्वं सौम्यो बुधो बुधः (विश्वेदेवाः) त्रिष्टुप् ।

**उद्बुध्यध्वं समनसः सखायः समग्निमिन्ध्वं बहवः सनीळाः ।**
**दधिक्रामग्निमुषसं च देवीमिन्द्रावतोऽवसे नि ह्वये वः ॥**
*(ऋ. १०-१०१-१)*

**इदं विष्णुर्विचक्रमे ... ।** *(पञ्चगव्यमेलनप्रकरणे) [20 पुटे]*

**सहस्रशीर्षा पुरुषः ... ।** *(पुरुषसूक्ते) [31 पुटे]*

बृहस्पते गृत्समदो बृहस्पतिस्त्रिष्टुप् ।

**बृहस्पते अति यदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु ।**
**यद्दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥**
*(ऋ. २-२३-१५)*

**इन्द्र श्रेष्ठानि ... ।** *(सन्ध्यावन्दनप्रकरणे) [3 पुटे]*

ब्रह्मणा ते गाथिनो विश्वामित्रो ब्रह्मा (इन्द्रः) त्रिष्टुप् ।

**ब्रह्मणा ते ब्रह्मयुजा युनज्मि हरी सखाया सधमाद आशू ।**
**स्थिरं रथं सुखमिन्द्राधितिष्ठन् प्रजानन्विद्वाँ उप याहि सोमम् ॥**
*(ऋ. ३-३५-४)*

इन्द्राणीमास्वित्यस्य इन्द्र इन्द्राणी (इन्द्रः) पङ्क्तिः ।

**इन्द्राणीमासु नारिषु सुभगामहमश्रवम् । नह्यस्या अपरं चन**
**जरसा मरते पतिर्विश्वस्मादिन्द्र उत्तरः ॥** *(ऋ. १०-८६-११)*

इन्द्रं वो वैश्वामित्रो मधुच्छन्दा इन्द्रो गायत्री ।

**इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः । अस्माकमस्तु केवलः ॥**
*(ऋ. १-७-१०)*

शमग्निरग्निभिः काण्वः इरिम्बिठिः शनैश्चरः (अग्निसूर्यानिलाः) पुरउष्णिक् (उष्णिक्) ।

**शमग्निरग्निभिः करच्छन्नस्तपतु सूर्यः । शं वातो वात्वरपा अप**
**स्रिधः ॥** *(ऋ. ८-१८-९)*

**प्रजापते नत्वदेतानि ... ।** *(गर्भाधानप्रकरणे) [60 पुटे]*

यमाय सोमं वैवस्वतो यमो यमोऽनुष्टुप् ।

**यमाय सोमं सुनुत यमाय जुहुता हविः । यमं ह यज्ञो गच्छत्यग्निदूतो अरङ्कृतः ॥** *(ऋ. १०-१४-१३)*

कया नो वामदेवो गोतमो राहु(इन्द्र)र्गायत्री ।

**कया नश्चित्र आ भुवदूती सदावृधः सखा । कया शचिष्ठया वृता ॥** *(ऋ. ४-३१-१)*

आयं गौः सार्पराज्ञी सर्पो गायत्री ।

**आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः । पितरं च प्रयन्त्स्वः ॥** *(ऋ. १०-१८९-१)*

परं मृत्यो यामायनः सङ्कुसुको मृत्युस्त्रिष्टुप् ।

**परं मृत्यो अनु परेहि पन्थां यस्ते स्व इतरो देवयानात् । चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान् ॥** *(ऋ. १०-१८-१)*

केतुं कृण्वन्निति वैश्वामित्रो मधुच्छन्दा केतु(इन्द्रः)र्गायत्री ।

**केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे । समुषद्भिरजायथाः ॥** *(ऋ. १-६-३)*

**ब्रह्म जज्ञानं ...** । *(पञ्चगव्यप्रकरणे) [20पुटे]*

स चित्र चित्रं बार्हस्पत्यो भारद्वाजो चित्रगुप्तः (अग्निः) त्रिष्टुप् ।

**स चित्र चित्रं चितयन्तमस्मे चित्रक्षत्र चित्रतमं वयोधाम् । चन्द्रं रयिं पुरुवीरं बृहन्तं चन्द्र चन्द्राभिर्गृणते युवस्व ॥** *(ऋ. ६-६-७)*

जातवेदसे मारीचः कश्यपो जातवेदा अग्निस्त्रिष्टुप् ।

जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः । स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥
*(ऋ. १-९९-१)*

गणानां त्वा ... । *(सन्ध्यावन्दनप्रकरणे) [1 पुटे]*

क्षेत्रस्य पतिना गौतमो वामदेवः क्षेत्रपालो (क्षेत्रपतिः) ऽनुष्टुप् ।

क्षेत्रस्य पतिना वयं हितेनेव जयामसि । गामश्वं पोषयित्वा स नो मृळातीदृशे ॥
*(ऋ. ४-५७-१)*

वास्तोष्पते प्रतिजानीह्यस्मान् ... । *(पुण्याहवाचनप्रकरणे) [१४ पुटे]*

त्र्यम्बकमिति मैत्रावरुणिर्वसिष्ठस्त्र्यम्बको (रुद्रः) ऽनुष्टुप् ।

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥
*(ऋ. ७-५९-१२)*

यत इन्द्र भर्गः प्रागाथः अभयङ्करेन्द्रः (इन्द्रः) सतो बृहती ।

यत इन्द्र भयामहे ततो नो अभयं कृधि । मघवञ्छग्धि तव तन्न ऊतिभिर्वि द्विषो वि मृधो जहि ॥
*(ऋ. ८-६१-१३)*

गन्धद्वारां ... । *(पुण्याहवाचनप्रकरणे) [11 पुटे]*

इन्द्रश्रेष्ठानि ... । *(सन्ध्यावन्दनप्रकरणे) [3 पुटे]*

अग्निं दूतं ... । *(नवग्रहप्रकरणे) [76 पुटे]*

यमाय सोमं ... । *(नवग्रहप्रकरणे) [79 पुटे]*

मो षु ण इति घौरः कण्वो निर्ऋति (मरुतः) र्गायत्री ।

**मो षु णः परापरा निर्ऋतिर्दुर्हणा वधीत् । पदीष्ट तृष्णया सह ॥**
(ऋ. १-३८-६)

**तत्त्वायामि ...** । (सन्ध्यावन्दनप्रकरणे) [3पुटे]

तव वायो व्यश्वो वायुर्गायत्री ।

**तव वायवृतस्पते त्वष्टुर्जामातरद्भुत । अवांस्या वृणीमहे ॥**
(ऋ. ८-२६-२१)

सोमो धेनुमिति राहुगणो गोतमः सोमस्त्रिष्टुप् ।

**सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं कर्मण्यं ददाति । सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाशदस्मै ॥** (ऋ. १-९१-२०)

तमीशानमिति राहुगणो गोतम ईशानो (विश्वेदेवाः) जगती ।

**तमीशानं जगतस्तस्थुषस्पतिं धियञ्जिन्वमवसे हूमहे वयम् । पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये ॥**
(ऋ. १-८९-५)

## गृहवास्तुदेवतामन्त्राः

वास्तोष्पते वसिष्ठो वास्तोष्पतिस्त्रिष्टुप् ।

**वास्तोष्पते प्रति जानीह्यस्मान् त्स्वावेशो अनमीवो भवा नः । यत् त्वेमहे प्रति तन्नो जुषस्व शं नो भव द्विपदे शं चतुष्पदे ॥**
(ऋ. ७-५४-१)

ब्रह्मणाते विश्वमित्रो ब्रह्मा (इन्द्रः) त्रिष्टुप् ।

**ब्रह्मणा ते ब्रह्मयुजा युनज्मि हरी सखाया सधमाद आशू । स्थिरं रथं सुखमिन्द्राधितिष्ठन् प्रजानन् विद्वाँ उपयाहि सोमम् ॥**
(ऋ. ३-३५-४)

त्वमर्यमा वसुश्रुत आत्रेयोऽर्यमा (अग्निः) त्रिष्टुप्।

**त्वमर्यमा भवसि यत्कनीनां नाम स्वधावन् गुह्यं बिभर्षि । अञ्जन्ति मित्रं सुधितं न गोभिर्यद्दम्पती समनसा कृणोषि ॥**

(ऋ. ५-३-२)

सविता पश्चतात् लुशो धानाकः सविता (विश्वेदेवाः) त्रिष्टुप्।

**सविता पश्चातात् सविता पुरस्तात् सवितोत्तरात्तात् सविताधरात्तात् । सविता नः सुवतु सर्वतातिं सविता नो रासतां दीर्घमायुः ॥**

(ऋ. १०-३६-१४)

अङ्गिरोभिर्वैवस्वतो यमो विवस्वान् (यमः) त्रिष्टुप्।

**अङ्गिरोभिरा गहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व । विवस्वन्तं हुवे यः पिता तेऽस्मिन् यज्ञे बर्हिष्या निषद्य ॥**(ऋ. १०-१४-५)

इन्द्रं वो मधुच्छन्दा वैश्वामित्र इन्द्रो गायत्री।

**इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः । अस्माकमस्तु केवलः ॥**

(ऋ. १-७-१०)

मित्रो जनान् गाथिनो विश्वामित्रो मित्रस्त्रिष्टुप्।

**मित्रो जनान् यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम् । मित्रः कृष्टीरनिमिषाभि चष्टे मित्राय हव्यं घृतवज्जुहोत ॥**

(ऋ. ३-५९-१)

मुञ्चामित्वेति प्राजपत्यो राजयक्ष्मा (राजयक्ष्मघ्नम्) त्रिष्टुप्।

**मुञ्चामि त्वा हविषा जीवनाय कमज्ञातयक्ष्मादुत राजयक्ष्मात् । ग्राहिर्जग्राह यदि वैतदेनं तस्या इन्द्राग्नी प्र मुमुक्तमेनम् ॥**

(ऋ. १०-१६१-१)

प्र पर्वतानामिति गाथिनो विश्वामित्रः भूधरः (नद्यः) त्रिष्टुप्।

**प्र पर्वतानामुशती उपस्थादश्वे इव विषिते हासमाने । गावेव शुभ्रे मातरा रिहाणे विपाट्छुतुद्री पयसा जवेते ॥**

*(ऋ. ३-३३-१)*

इदमापस्सिन्धुद्वीप आपवत्सो (आपो)ऽनुष्टुप्।

**इदमापः प्र वहत यत् किं च दुरितं मयि । यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् ॥** *(ऋ. १०-९-८)*

अप्सु मे सिन्धुद्वीप आपो गायत्री।

**अप्सु मे सोमो आब्रवीदन्तर्विश्वानि भेषजा । अग्निं च विश्वशम्भुवम् ॥** *(ऋ. १०-९-६)*

तत्सवितुर्गाथिनो विश्वामित्रः सविता गायत्री।

**तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥** *(ऋ. ३-६२-१०)*

जीमूतस्येवेति पायुर्भारद्वाजो जयः (वर्म) त्रिष्टुप्।

**जीमूतस्येव भवति प्रतीकं यद्वर्मी याति समदामुपस्थे । अनाविद्धया तन्वा जय त्वं स त्वा वर्मणो महिमा पिपर्तु ॥**

*(ऋ. ६-७५-१)*

त्वमग्ने शौनको गृत्समदो रुद्रो (अग्निः) जगती।

**त्वमग्ने रुद्रो असुरो महो दिवस्त्वं शर्धो मारुतं पृक्ष ईशिषे । त्वं वातैररुणैर्यासि शङ्गयस्त्वं पूषा विधतः पासि नु त्मना ॥**

*(ऋ. २-१-६)*

अग्नेनयागस्त्यो मैत्रावरुणिः शिखी (अग्निः) त्रिष्टुप्।

अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।
युयोध्य१स्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥
(ऋ. १-१८९-१)

पर्जन्याय मैत्रावरुणिर्वसिष्ठः पर्जन्यो गायत्री ।

पर्जन्याय प्र गायत दिवस्पुत्राय मीह्लुषे । स नो यवसमिच्छतु ॥ (ऋ. १-१०२-१)

आषाह्ळमिति गोतमो राहुगणो जयन्तः (सोमः) त्रिष्टुप् ।

आषाह्ळं युत्सु पृतनासु पप्रिं स्वर्षामप्सां वृजनस्य गोपाम् ।
भरेषुजां सुक्षितिं सुश्रवसं जयन्तं त्वामनु मदेम सोम ॥
(ऋ. १-९१-२१)

इन्द्र मरुत्व इति गाथिनो विश्वामित्र इन्द्रस्त्रिष्टुप् ।

इन्द्र मरुत्व इह पाहि सोमं यथा शार्याते अपिबः सुतस्य ।
तव प्रणीती तव शूर शर्मन्ना विवासन्ति कवयः सुयज्ञाः ॥
(ऋ. ३-५१-७)

उत् सूर्य इति मैत्रावरुणिर्वसिष्ठः सूर्यस्त्रिष्टुप् ।

उत्सूर्यो बृहदर्चींष्यश्रेत्पुरु विश्वा जनिम मानुषाणाम् । समो दिवा ददृशे रोचमानः क्रत्वा कृतः सुकृतः कर्तृभिर्भूत् ॥
(ऋ. ७-६२-१)

ऋतञ्चेति माधुच्छन्दसोऽघमर्षणः सत्यो (भाववृत्तम्) ऽनुष्टुप् ।

ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत । ततो रात्र्यजायत ततः समुद्रो अर्णवः ॥ (ऋ. १०-१९०-१)

सोमं राजानमिति तापसोऽग्निर्भृशो (विश्वेदेवाः) ऽनुष्टुप् ।

**सोमं राजानमवसेऽग्निं गीर्भिर्हवामहे । आदित्यान् विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम् ॥** *(ऋ. १०-१४१-३)*

आदित्प्रत्नस्येति काण्वो वत्स आकाशो (इन्द्रः) गायत्री ।

**आदित्प्रत्नस्य रेतसो ज्योतिष्पश्यन्ति वासरम् । परो यदिध्यते दिवा ॥** *(ऋ. ८-६-३०)*

क्राणा शिशुरिति आप्त्यस्त्रितः सोमः पवमान उष्णिक् ।

**क्राणा शिशुर्महीनां हिन्वन्नृतस्य दीधितिम् । विश्वा परि प्रिया भुवदध द्विता ॥** *(ऋ. ९-१०२-१)*

पूषा त्वेति यामायनः देवश्रवाः पूषा त्रिष्टुप् ।

**पूषा त्वेतश्च्यावयतु प्र विद्वाननष्टपशुर्भुवनस्य गोपाः । स त्वैतेभ्यः परि ददत्पितृभ्योऽग्निर्देवेभ्यः सुविदत्रियेभ्यः ॥** *(ऋ. १०-१७-३)*

आपथय इत्यात्रेयः श्यावाश्वो मरुतोऽनुष्टुप् ।

**आपथयो विपथयोऽन्तस्पथा अनुपथाः । एतेभिर्मह्यं नामभिर्यज्ञं विष्टार ओहते ॥** *(ऋ. ५-५२-१०)*

गृहङ्गृहमिति कक्षीवान् दैर्घतमस औशिजो गृहतक्षः (उषाः) त्रिष्टुप् ।

**गृहङ्गृहमहना यात्यच्छा दिवेदिवे अधि नामा दधाना । सिषासन्ती द्योतना शश्वदागादग्रमग्रमिद्भजते वसूनाम् ॥** *(ऋ. १-१२३-४)*

यमाय मध्विति वैवस्वतो यमो यमो बृहती ।

यमाय मधुमत्तमं राज्ञे हव्यं जुहोतन । इदं नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः ॥ (ऋ. १०-१४-१५)

सोमोददिति सूर्या सावित्री सूर्यासावित्र्यनुष्टुप् ।

सोमो ददद्गन्धर्वाय गन्धर्वो ददद्ग्नये । रयिं च पुत्राँश्चादादग्निर्मह्यमथो इमाम् ॥ (ऋ. १०-८५-४१)

त्वमग्ने राजा गृत्समदो भार्गवः शौनको भृङ्गराजो (अग्निः) जगती ।

त्वमग्ने राजा वरुणो धृतव्रतस्त्वं मित्रो भवसि दस्म ईड्यः । त्वमर्यमा सत्पतिर्यस्य सम्भुजं त्वमंशो विदथे देव भाजयुः ॥ (ऋ. २-१-४)

मृगो नेति ऐन्द्रो जयो मृगः (इन्द्रः) त्रिष्टुप् ।

मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जगन्था परस्याः । सृकं संशाय पविमिन्द्र तिग्मं विशत्रून् ताढि वि मृधो नुदस्व ॥ (ऋ. १०-१८०-२)

आहं पितॄनिति शङ्खो यामायनः पितरस्त्रिष्टुप् ।

आहं पितॄन् त्सुविदत्राँ अवित्सि नपातं च विक्रमणं च विष्णोः । बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहागमिष्ठाः ॥ (ऋ. १०-१५-३)

वेत्था हीति बार्हस्पत्यो भारद्वाजो दौवारिको (अग्निः) गायत्री ।

वेत्थां हि वेधो अध्वनः पथश्च देवाञ्जसा । अग्ने यज्ञेषु सुक्रतो ॥ (ऋ. ६-१६-३)

ग्रीवाभ्यस्तः काश्यपः विवृहा सुग्रीवो (यक्ष्मनाशनम्)ऽनुष्टुप् ।

**ग्रीवाभ्यस्त उष्णिहाभ्यः कीकसाभ्यो अनूक्यात् । यक्ष्मं दोषण्य१मंसाभ्यां बाहुभ्यां वि वृहामि ते ॥** (ऋ. १०-१६३-२)

आ तू न इति काण्वः कुसीदी पुष्पदन्तो (इन्द्रः) गायत्री ।

**आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभं सं गृभाय । महाहस्ती दक्षिणेन ॥** (ऋ. ८-८१-१)

ध्रुवासु त्वा मैत्रावरुणिर्वसिष्ठो वरुणः (पाशविमोचनी) त्रिष्टुप् ।

**ध्रुवासु त्वासु क्षितिषु क्षियन्तो व्य१स्मत् पाशं वरुणो मुमोचत् । अवो वन्वाना अदितेरुपस्थाद्यूयं पात स्वस्तिभिः सदा नः ॥** (ऋ. ७-८८-७)

तमु ष्टुहीति भौमोऽत्रिरसुरः (रुद्रः) त्रिष्टुप् ।

**तमु ष्टुहि यः स्विषुः सुधन्वा यो विश्वस्य क्षयति भेषजस्य । यक्ष्वा महे सौमनसाय रुद्रं नमोभिर्देवमसुरं दुवस्य ॥** (ऋ. ५-४२-११)

अगस्त्य इत्यगस्त्यशिष्यो ब्रह्मचारी शोषः (रतिः) त्रिष्टुप् ।

**अगस्त्यः खनमानः खनित्रैः प्रजामपत्यं बलमिच्छमानः । उभौ वर्णावृषिरुग्रः पुपोष सत्या देवेष्वाशिषो जगाम ॥** (ऋ. १-१७९-६)

ये वध्व इति सूर्या सावित्री पापयक्ष्मा (दम्पत्योर्यक्ष्मनाशनं) अनुष्टुप् ।

**ये वध्वश्चन्द्रं वहतुं यक्ष्मा यन्ति जनादनु । पुनस्तान् यज्ञिया देवा नयन्तु यत आगताः ॥** (ऋ. १०-८५-३१)

उद्यन्नद्येत्यस्य काण्वः प्रस्कण्वो रोगघ्नो (सूर्यः)ऽनुष्टुप् ।

उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम् । हृद्रोगं मम सूर्य हरिमाणं च नाशय ॥ (ऋ. १-५०-११)

धन्वना गेति पायुर्भारद्वाजः नागः (धनुः) त्रिष्टुप् ।

धन्वना गा धन्वनाजिं जयेम धन्वना तीव्राः समदो जयेम । धनुः शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम ॥ (ऋ. ६-७५-२)

विश्वतश्चक्षुरिति विश्वकर्मा भौवनः मुख्यः (विश्वकर्मा) त्रिष्टुप् ।

विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् । सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन् देव एकः ॥ (ऋ. १०-८१-३)

आ पक्थास इति मैत्रावरुणिर्वसिष्ठो भल्लाटः (इन्दुः) त्रिष्टुप् ।

आ पक्थासो भलानसो भनन्ताऽलिनासो विषाणिनः शिवासः । आ योऽनयन् सधमा आर्यस्य गव्या तृत्सुभ्यो अजगन् युधा नॄन् ॥ (ऋ. ७-१८-७)

सोमो धेनुमिति गोतमो राहुगणः सोमस्त्रिष्टुप् ।

सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं कर्मण्यं ददाति । सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाशदस्मै ॥ (ऋ. १-९१-२०)

अहन् वृत्रमित्यस्याङ्गिरसो हिरण्यस्तूपोऽहिः (इन्द्रः) त्रिष्टुप् ।

अहन् वृत्रं वृत्रतरं व्यंसमिन्द्रो वज्रेण महता वधेन । स्कन्धांसीव कुलिशेना विवृक्णाहिः शयत उपपृक् पृथिव्याः ॥

(ऋ. १-३२-५)

अदितिरिति गोतमो राहुगणोऽदितिस्त्रिष्टुप् ।

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः । विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम् ॥

(ऋ. १-८९-१०)

चित्तिमचित्तिमिति गौतमो वामदेवो दितिः (अग्निः) त्रिष्टुप् ।

चित्तिमचित्तिं चिनवद्वि विद्वान् पृष्ठेव वीता वृजिना च मर्तान् । राये च नः स्वपत्याय देव दितिं च रास्वादितिमुरुष्य ॥

(ऋ. ४-२-११)

कुमारं मातात्रेयः कुमारः स्कन्दः (अग्निः) त्रिष्टुप् ।

कुमारं माता युवतिः समुब्धं गुहा बिभर्ति न ददाति पित्रे । अनीकमस्य न मिनज्जनासः पुरः पश्यन्ति निहितमरतौ ॥

(ऋ. ५-२-१)

त्वमर्यमा वसुश्रुत आत्रेयोऽर्यमा (अग्निः) त्रिष्टुप् ।

त्वमर्यमा भवसि यत्कनीनां नाम स्वधावन् गुह्यं बिभर्षि । अञ्जन्ति मित्रं सुधितं न गोभिर्यद्दम्पती समनसा कृणोषि ॥

(ऋ. ५-३-२)

अजीजनन्निति गाथिनो विश्वामित्रो जम्भकः (अग्निः) त्रिष्टुप ।

अजीजनन्नमृतं मर्त्यासोऽस्रेमाणं तरणिं वीळुजम्भम् । दश स्वसारो अग्रुवः समीचीः पुमांसं जातमभि सं रभन्ते ॥

(ऋ. ३-२९-१३)

यत्रा सुपर्णेति दीर्घतमा औचथ्यः पिलिपिञ्छः (विश्वे देवाः) त्रिष्टुप् ।

**यत्रा सुपर्णा अमृतस्य भागमनिमेषं विदथाभिस्वरन्ति । इनो विश्वस्य भुवनस्य गोपाः स मा धीरः पाकमत्रा विवेश ॥**

(ऋ. १-१६४-२१)

घर्मेवेति भूतांशः काश्यपो चरकी (अश्विनौ) त्रिष्टुप् ।

**घर्मेव मधु जठरे सनेरू भगेविता तुर्फरी फारिवारम् । पतरेव चचरा चन्द्रनिर्णिङ्मनऋङ्गा मनन्या३न जग्मी ॥**

(ऋ. १०-१०६-८)

बृहन्तेवेति भूतांशः काश्यपो विदारी (अश्विनौ) त्रिष्टुप् ।

**बृहन्तेव गम्भरेषु प्रतिष्ठां पादेव गाधं तरते विदाथः । कर्णेव शासुरनु हि स्मराथोऽंशेव नो भजतं चित्रमप्नः ॥**

(ऋ. १०-१०६-९)

युवोर्हीति नार्मेधः शकपूतः पूतना (मित्रावरुणौ) प्रस्तारपङ्क्तिः ।

**युवोर्हि मातादितिर्विचेतसा द्यौर्न भूमिः पयसा पुपूतनि । अवप्रिया दिदिष्टन सूरो निनिक्त रश्मिभिः ॥**

(ऋ. १०-१३२-६)

पाहि न इन्द्रेति परुच्छेपो दैवोदसिः पापराक्षसी (इन्द्रः) अष्टिः ।

**पाहि न इन्द्र सुष्टुत स्रिधोऽवयाता सदमिद्दुर्मतीनां देवः सन् दुर्मतीनाम् । हन्ता पापस्य रक्षसस्त्राता विप्रस्य मावतः । अधा हित्वा जनिता जीजनद्वसो रक्षोहणं त्वा जीजनद्वसो ॥**

(ऋ. १-१२९-११)

## ब्रह्मादिमण्डलदेवतामन्त्राः

**ब्रह्म जज्ञानं ...** । *(पञ्चगव्यप्रकरणे) [20 पुटे]*

**आप्यायस्व ...** । *(देवपूजाप्रकरणे) [7 पुटे]*

अभित्वा शुनःशेप ईशानो (सविता) गायत्री ।

**अभि त्वा देव सवितरीशानं वार्याणाम् । सदावन् भागमीमहे ॥**

*(ऋ. १-२४-३)*

**इन्द्रं वो विश्वतस्परि ...** । *(नवग्रहप्रकरणे) [78 पुटे]*

**अग्निं दूतं वृणीमहे ...** । *(नवग्रहप्रकरणे) [76 पुटे]*

**यमाय सोमं ...** । *(नवग्रहप्रकरणे) [79 पुटे]*

**मोषुणः परापरा ...** । *(नवग्रहप्रकरणे) [81 पुटे]*

**तत्त्वायामि ...** । *(सन्ध्यावन्दनप्रकरणे) [3 पुटे]*

वायो शतं गौतमो वामदेवो वायुरनुष्टुप् ।

**वायो शतं हरीणां युवस्व पोष्याणाम् । उत वा ते सहस्रिणो रथ आ यातु पाजसा ॥**

*(ऋ. ४-४८-५)*

ज्मया अत्र मैत्रावरुणिर्वसिष्ठो वसवः (विश्वे देवाः) त्रिष्टुप् ।

**ज्मया अत्र वसवो रन्त देवा उरावन्तरिक्षे मर्जयन्त शुभ्राः । अर्वाक्पथ उरुज्रयः कृणुध्वं श्रोता दूतस्य जग्मुषो नो अस्य ॥**

*(ऋ. ७-३९-६)*

आ रुद्रास आत्रेयः श्यावाश्वः एकादश रुद्रा (मरुतः) जगती ।

आ रुद्रास इन्द्रवन्तः सजोषसो हिरण्यरथाः सुविताय गन्तन ।
इयं वो अस्मत्प्रति हर्यते मतिस्तृष्णजे न दिव उत्सा उदन्यवे ॥
(ऋ. ५-५७-१)

त्यान्नु मत्स्यः द्वादशादित्याः (आदित्याः) गायत्री ।

त्यान् नु क्षत्रियाँ अव आदित्यान् याचिषामहे । सुमृळीकाँ अभिष्टये ॥ (ऋ. ८-६७-१)

अश्विनावर्ति गोतमो राहुगणोऽश्विनावुष्णिक् ।

अश्विना वर्तिरस्मदा गोमद्दस्रा हिरण्यवत् । अर्वाग्रथं समनसा नि यच्छतम् ॥ (ऋ. १-९२-१६)

ओमासो मधुच्छन्दा विश्वेदेवा गायत्री ।

ओमासश्चर्षणीधृतो विश्वे देवास आ गत । दाश्वांसो दाशुषः सुतम् ॥ (ऋ. १-३-७)

अभित्यं वामदेवः सप्तयक्षा अष्टी ।

अभित्यं देवꣳ सवितारमूण्योः कविक्रतुमर्चामि सत्यसवसꣳ रत्नधामभि प्रियं मतिमूर्ध्वा यस्यामतिर्भा अदिद्युतत् सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा सुवः ॥ (तै. सं. १-२-६-२)

आयङ्गौः पृश्नि ... । *(नवग्रहप्रकरणे) [79 पुटे]*

अप्सरसामृष्यभृङ्गो (एतशः) गन्धर्वाप्सरसो (केशिनः) ऽनुष्टुप् ।

अप्सरसां गन्धर्वाणां मृगाणां चरणे चरन् । केशी केतस्य विद्वान् त्सखा स्वादुर्मदिन्तमः ॥ (ऋ. १०-१३६-६)

यदक्रन्दो दीर्घतमा औचथ्यः स्कन्दः (अश्वः) त्रिष्टुप् ।

**यदक्रन्दः प्रथमं जायमान उद्यन् त्समुद्रादुत वा पुरीषात् । श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यं महि जातं ते अर्वन् ॥**
*(ऋ. १-१६३-१)*

ऋषभमृषभो वैराजो नन्दीश्वरो (सपत्नघ्नम्) ऽनुष्टुप् ।

**ऋषभं मा समानानां सपत्नानां विषासहिम् । हन्तारं शत्रूणां कृधि विराजं गोपतिं गवाम् ॥** *(ऋ. १०-१६६-१)*

**कद्रुद्राय प्रचेतसे ... ।** *(नवग्रहप्रकरणे) [76 पुटे]*

**कुमारं माता युवतिः ... ।** *(नवग्रहप्रकरणे) [77 पुटे]*

आदितिरिति बृहस्पतिर्दक्षो (देवाः) ऽनुष्टुप् ।

**अदितिर्ह्यजनिष्ट दक्ष या दुहिता तव । तां देवा अन्वजायन्त भद्रा अमृतबन्धवः ॥** *(ऋ. १०-७२-५)*

तामग्निवर्णां सौभरिर्दुर्गा त्रिष्टुप् ।

**तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् । दुर्गां देवीं शरणमहं प्र पद्ये सुतरसि तरसे नमः सुतरसि तरसे नमः ॥** *(ऋग्वेदपरिशिष्टे)*

**इदं विष्णुर्विचक्रमे ... ।** *(पञ्चगव्यप्रकरणे) [20 पुटे]*

उदीरतां शङ्खः स्वधा (पितरः) त्रिष्टुप् ।

उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः । असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥

(ऋ. १०-१५-१)

परं मृत्यो ... । *(नवग्रहप्रकरणे) [79 पुटे]*

गणानां त्वा ... । *(सन्ध्यावन्दनप्रकरणे) [1 पुटे]*

शंनो देवीरभिष्टय ... । *(पुण्याहवाचनप्रकरणे) [15 पुटे]*

मरुतो यस्य गोतमो मरुतो गायत्री ।

मरुतो यस्य हि क्षये पाथा दिवो विमहसः । स सुगोपातमो जनः ॥

(ऋ. १-८६-१)

स्योना पृथिवि ... । *(नवग्रहप्रकरणे) [77 पुटे]*

इमं मे गङ्गे यमुने ... । *(पुण्याहवाचनप्रकरणे) [10 पुटे]*

धाम्नोधाम्नो वामदेवः सप्तसागरा अष्टी ।

धाम्नोधाम्नो राजन्नितो वरुण नो मुञ्च यदापो अघ्निया (इति) वरुणेति शपामहे ततो वरुण नो मुञ्च ॥ (मयि वापोमोषधीर्हिंसीरतो विश्वव्यचाभूस्त्वेतो वरुण नो मुञ्च) ॥

(तै. १-३-११-१५)

(नर्य प्रजां मे गोपाय । अमृतत्वाय जीवसे । जातां जनिष्यमाणां च । अमृते सत्ये प्रतिष्ठिताम् ॥)

## सौरसूक्तानि

उदुत्यमिति त्रयोदशर्चस्य सूक्तस्य काण्वः प्रस्कण्वः सूर्यो नवाद्या गायत्र्योऽन्त्याश्चतस्रोऽनुष्टुभः ।

उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम्
।। १ ।। अप त्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः । सूराय
विश्वचक्षसे ।। २ ।। अदृश्रमस्य केतवो वि रश्मयो जनाँ अनु ।
भ्राजन्तो अग्नयो यथा ।। ३ ।। तरणिर्विश्वदर्शतो ज्योतिष्कृदसि
सूर्य । विश्वमा भासि रोचनम् ।। ४ ।। प्रत्यङ्देवानां विशः
प्रत्यङ्ङुदेषि मानुषान् । प्रत्यङ्विश्वं स्वर्दृशे ।। ५ ।। येना
पावक चक्षसा भुरण्यन्तं जनाँ अनु । त्वं वरुण पश्यसि ।। ६ ।।
वि द्यामेषि रजस्पृथ्वहा मिमानो अक्तुभिः । पश्यञ्जन्मानि सूर्य
।। ७ ।। सप्त त्वा हरितो रथे वहन्ति देव सूर्य । शोचिष्केशं
विचक्षण ।। ८ ।। अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्यः ।
ताभिर्याति स्वयुक्तिभिः ।। ९ ।। उद्वयं तमसस्परि ज्योतिष्पश्यन्त
उत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ।। १० ।। उद्यन्नद्य
मित्रमह आरोहन्नुत्तरां दिवम् । हृद्रोगं मम सूर्य हरिमाणं च
नाशय ।। ११ ।। शुकेषु मे हरिमाणं रोपणाकासु दध्मसि ।
अथो हारिद्रवेषु मे हरिमाणं नि दध्मसि ।। १२ ।।

उदगादयमादित्यो विश्वेन सहसा सह । द्विषन्तं मह्यं रन्धयन्
मो अहं द्विषते रधम् ॥ १३ ॥ (ऋ. १-५०)

चित्रं देवानामिति षळृचस्य सूक्तस्य कुत्सः सूर्यस्त्रिष्टुप् ।

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा
द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥ १ ॥
सूर्यो देवीमुषसं रोचमानां मर्यो न योषामभ्येति पश्चात् । यत्रा
नरो देवयन्तो युगानि वितन्वते प्रति भद्राय भद्रम् ॥ २ ॥
भद्रा अश्वा हरितः सूर्यस्य चित्रा एतग्वा अनुमाद्यासः ।
नमस्यन्तो दिव आ पृष्ठमस्थुः परि द्यावापृथिवी यन्ति सद्यः
॥ ३ ॥ तत् सूर्यस्य देवत्वं तन्महित्वं मध्या कर्तोर्विततं सं
जभार । यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै
॥ ४ ॥ तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपं कृणुते द्योरुपस्थे ।
अनन्तमन्यत् रुशदस्य पाजः कृष्णमन्यद्धरितः सं भरन्ति ॥ ५ ॥
अद्या देवा उदिता सूर्यस्य निरंहसः पिपृता निरवद्यात् । तन्नो
मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः
॥ ६ ॥ (ऋ. १-११५)

इन्द्रं मित्रमिति द्वयोरौचथ्यो दीर्घतमाः सूर्यस्त्रिष्टुप् ।

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् । एकं
सद् विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥ १ ॥

कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिवमुत्पतन्ति । त आववृत्रन् त्सदनादृतस्यादिद्घृतेन पृथिवी व्युद्यते ॥ २ ॥
(ऋ. १-१६४-४६, ४७)

हंसः शुचिषद् वामदेवो गोतमः सूर्यो जगती।

हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम् ॥
(ऋ. ४-४०-५)

यत्त्वा सूर्येति भौमोऽत्रिः सूर्योऽनुष्टुप्।

यत्त्वा सूर्य स्वर्भानुस्तमसाविध्यदासुरः । अक्षेत्रविद्यथा मुग्धो भुवनान्यदीधयुः ॥ (ऋ. ५-४०-५)

यदद्य मैत्रावरुणिर्वसिष्ठः सूर्यस्त्रिष्टुप्।

यदद्य सूर्य ब्रवोऽनागा उद्यन्मित्राय वरुणाय सत्यम् । वयं देवत्रादिते स्याम तव प्रियासो अर्यमन् गृणन्तः ॥
(ऋ. ७-६०-१)

उत्सूर्य इति तिसृणां मैत्रावरुणिर्वसिष्ठः सूर्यस्त्रिष्टुप्।

उत्सूर्यो बृहदर्चींष्यश्रेत्पुरु विश्वा जनिम मानुषाणाम् । समो दिवा ददृशे रोचमानः क्रत्वा कृतः सुकृतः कर्तृभिर्भूत् ॥ १ ॥ स सूर्य प्रति पुरो न उद्गा एभिः स्तोमेभिरेतशेभिरेवैः । प्र नो मित्राय वरुणाय वोचोऽनागसो अर्यम्णे अग्नये च ॥ २ ॥ वि नः सहस्रं शुरुधो रदन्त्वृतावानो वरुणो मित्रो अग्निः । यच्छन्तु चन्द्रा उपमं नो अर्कमा नः कामं पूपुरन्तु स्तवानाः ॥ ३ ॥
(ऋ. ७/६३/१-३)

उद्वेति सुभग इति सार्धचतसृणां मैत्रावरुणिर्वसिष्ठः सूर्यस्त्रिष्टुप् ।

उद्वेति सुभगो विश्वचक्षाः साधारणः सूर्यो मानुषाणाम् ।
चक्षुर्मित्रस्य वरुणस्य देवश्चर्मेव यः समविव्यक्तमांसि ।। १ ।।
उद्वेति प्रसवीता जनानां महान् केतुरर्णवः सूर्यस्य । समानं
चक्रं पर्याविवृत्सन्यदेतशो वहति धूर्षु युक्तः ।। २ ।। विभ्राजमान
उषसामुपस्थाद्रेभैरुदेत्यनुमद्यमानः । एष मे देवः सविता
चच्छन्द यः समानं न प्रमिनाति धाम ।। ३ ।। दिवो रुक्म
उरुचक्षा उदेति दूरे अर्थस्तरणिर्भ्राजमानः । नूनं जनाः सूर्येण
प्रसूता अयन्नर्थानि कृणवन्नपांसि ।। ४ ।। यत्रा चक्रुरमृता
गातुमस्मै श्येनो न दीयन्नन्वेति पाथः ।। (ऋ. ७/६३/१-४।।)

उदुत्यद्दर्शतमिति तृचस्य सूर्यः प्रगाथः तृतीया पुर उष्णिक् ।

उदु त्यद्दर्शतं वपुर्दिव एति प्रतिह्वरे । यदीमाशुर्वहति देव एतशो
विश्वस्मै चक्षसे अरम् ।। १ ।। शीर्ष्णः शीर्ष्णो जगतस्तस्थुषस्पतिं
समया विश्वमा रजः । सप्त स्वसारः सुविताय सूर्यं वहन्ति
हरितो रथे ।। २ ।। तच्चक्षुर्देवहितं शुक्रमुच्चरत् । पश्येम शरदः
शतं जीवेम शरदः शतम् ।। ३ ।। (ऋ. ७/६६/१४-१६)

बण्महाँ इति द्वयोः जमदग्निर्भार्गवः ऋषिः आद्या बृहती छन्दः द्वितीया
स्तोबृहती छन्दः सूर्यो देवता ।

बण्महाँ असि सूर्य बळादित्य महाँ असि । महस्ते सतो महिमा पनस्यतेऽद्धा देव महाँ असि ॥ १ ॥ बट्सूर्य श्रवसा महाँ असि सत्रा देव महाँ असि । मह्ना देवानामसुर्यः पुरोहितो विभु ज्योतिरदाभ्यम् ॥ २ ॥ (ऋ. ७/१०१/११, १२)

नमो मित्रस्येति द्वादशर्चस्य सूक्तस्य सौर्योऽभितपाः सूर्यो जगती दशमी त्रिष्टुप् ।

नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतं सपर्यत । दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शंसत ॥ १ ॥ सा मा सत्योक्तिः परि पातु विश्वतो द्यावा च यत्र ततनन्नहानि च । विश्वमन्यन्नि विशते यदेजति विश्वाहापो विश्वाहोदेति सूर्यः ॥ २ ॥ न ते अदेवः प्रदिवो नि वासते यदेतशेभिः पतरै रथर्यसि । प्राचीनमन्यदनु वर्तते रज उदन्येन ज्योतिषा यासि सूर्य ॥ ३ ॥ येन सूर्य ज्योतिषा बाधसे तमो जगच्च विश्वमुदियर्षि भानुना । तेनास्मद्विश्वामनिरामनाहुतिमपामीवामप दुष्ष्वप्न्यं सुव ॥ ४ ॥ विश्वस्य हि प्रेषितो रक्षसि व्रतमहेळयन्नुच्चरसि स्वधा अनु । यदद्य त्वा सूर्योपब्रवामहै तं नो देवा अनु मंसीरत क्रतुम् ॥ ५ ॥ तं नो द्यावापृथिवी तन्न आप इन्द्रः शृण्वन्तु मरुतो हवं वचः । मा शूने भूम सूर्यस्य सन्दृशि भद्रं जीवन्तो जरणामशीमहि ॥ ६ ॥ विश्वाहा त्वा सुमनसः सुचक्षसः

प्रजावन्तो अनमीवा अनागसः । उद्यन्तं त्वा मित्रमहो दिवेदिवे
ज्योग्जीवाः प्रति पश्येम सूर्य ॥ ७ ॥ महि ज्योतिर्बिभ्रतं त्वा
विचक्षण भास्वन्तं चक्षुषेचक्षुषे मयः । आरोहन्तं बृहतः
पाजसस्परि वयं जीवाः प्रति पश्येम सूर्य ॥ ८ ॥ यस्य ते
विश्वा भुवनानि केतुना प्र चेरते नि च विशन्ते अक्तुभिः ।
अनागास्त्वेन हरिकेश सूर्याऽह्नाह्ना नो वस्यसावस्यसोदिहि
॥ ९ ॥ शं नो भव चक्षसा शं नो अह्ना शं भानुना शं हिमा
शं घृणेन । यथा शमध्वञ्छमसद्दुरोणे तत्सूर्य द्रविणं धेहि चित्रम्
॥ १० ॥ अस्माकं देवा उभयाय जन्मने शर्म यच्छत द्विपदे
चतुष्पदे । अदत्पिबदूर्जयमानमाशितं तदस्मे शं योररपो दधातन
॥ ११ ॥ यद्वो देवाश्चकृम जिह्वया गुरु मनसो वा प्रयुती
देवहेळनम् । अरावा यो नो अभि दुच्छुनायते तस्मिन् तदेनो
वसवो नि धेतन ॥ १२ ॥ *(ऋ. १०-३७)*

सूर्यो नो दिवस्पातु ... । *(गर्भाधानप्रकरणे) [62 पुटे]*

विभ्राड् बृहदिति चतुर्ऋचस्य सूक्तस्य विभ्राट् सौर्यः सूर्यो जगती । अन्त्या प्रस्तारपङ्क्तिः ॥

विभ्राड् बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविह्रुतम् ।
वातजूतो यो अभिरक्षति त्मना प्रजाः पुपोष पुरुधा वि राजति
॥ २ ॥ विभ्राड् बृहत्सुभृतं वाजसातमं धर्मन् दिवो धरुणे

सत्यमर्पितम् । अमित्रहा वृत्रहा दस्युहन्तमं ज्योतिर्जज्ञे असुरहा सपत्नहा ॥ २ ॥ इदं श्रेष्ठं ज्योतिषां ज्योतिरुत्तमं विश्वजिद्धनजिदुच्यते बृहत् । विश्वभ्राड् भ्राजो महि सूर्यो दृश उरु पप्रथे सह ओजो अच्युतम् ॥ ३ ॥ विभ्राजञ्ज्योतिषा स्व१रगच्छो रोचनं दिवः । येनेमा विश्वा भुवनान्याभृता विश्वकर्मणा विश्वदेव्यावता ॥ ४ ॥ (ऋ. १०-१७०)

## शन्नः सूक्तम्

शं न इन्द्राग्नीति पञ्चदशर्चस्य सूक्तस्य मैत्रावरुणिर्वसिष्ठ ऋषिः । त्रिष्टुप् छन्दः ॥ विश्वे देवा देवताः ।

शं न इन्द्राग्नी भवतामवोभिः शं न इन्द्रावरुणा रातहव्या । शमिन्द्रासोमा सुविताय शं योः शं न इन्द्रापूषणा वाजसातौ ॥ १ ॥ शं नो भगः शमु नः शंसो अस्तु शं नः पुरन्धिः शमु सन्तु रायः । शं नः सत्यस्य सुयमस्य शंसः शं नो अर्यमा पुरुजातो अस्तु ॥ २ ॥ शं नो धाता शमु धर्ता नो अस्तु शं न उरुची भवतु स्वधाभिः । शं रोदसी बृहती शं नो अद्रिः शं नो देवानां सुहवानि सन्तु ॥ ३ ॥ शं नो अग्निर्ज्योतिरनीको अस्तु शं नो मित्रावरुणावश्विना शम् । शं नः सुकृतां सुकृतानि सन्तु शं न इषिरो अभि वातु वातः ॥ ४ ॥ शं नो द्यावापृथिवी पूर्वहूतौ शमन्तरिक्षं दृशये नो

अस्तु । शं न ओषधीर्वनिनो भवन्तु शं नो रजसस्पतिरस्तु जिष्णुः
॥ ५ ॥ शं न इन्द्रो वसुभिर्देवो अस्तु शमादित्येभिर्वरुणः
सुशंसः । शं नो रुद्रो रुद्रेभिर्जलाषः शं नस्त्वष्टा ग्नाभिरिह
शृणोतु ॥ ६ ॥ शं नः सोमो भवतु ब्रह्म शं नः शं नो
ग्रावाणः शमु सन्तु यज्ञाः । शं नः स्वरूणां मितयो भवन्तु
शं नः प्रस्वः१ शम्वस्तु वेदिः ॥ ७ ॥ शं नः सूर्य उरुचक्षा
उदेतु शं नश्चतस्रः प्रदिशो भवन्तु । शं नः पर्वता ध्रुवयो
भवन्तु शं नः सिन्धवः शमु सन्त्वापः ॥ ८ ॥ शं नो
अदितिर्भवतु व्रतेभिः शं नो भवन्तु मरुतः स्वर्काः । शं नो
विष्णुः शमु पूषा नो अस्तु शं नो भवित्रं शम्वस्तु वायुः ॥ ९ ॥
शं नो देवः सविता त्रायमाणः शं नो भवन्तूषसो विभातीः ।
शं नः पर्जन्यो भवतु प्रजाभ्यः शं नः क्षेत्रस्य पतिरस्तु शम्भुः
॥ १० ॥ शं नो देवा विश्वदेवा भवन्तु शं सरस्वती सह
धीभिरस्तु । शमभिषाचः शमु रातिषाचः शं नो दिव्याः
पार्थिवाः शं नो अप्याः ॥ ११ ॥ शं नः सत्यस्य पतयो
भवन्तु शं नो अर्वन्तः शमु सन्तु गावः । शं न ऋभवः सुकृतः
सुहस्ताः शं नो भवन्तु पितरो हवेषु ॥ १२ ॥ शं नो अज
एकपाद्देवो अस्तु शं नोऽहिर्बुध्न्य१ः शं समुद्रः । शं नो अपां
नपात् पेरुरस्तु शं नः पृश्निर्भवतु देवगोपा ॥ १३ ॥ आदित्या

रुद्रा वसवो जुषन्तेदं ब्रह्म क्रियमाणं नवीयः । शृण्वन्तु नो दिव्याः पार्थिवासो गोजाता उत ये यज्ञियासः ।। १४ ।। ये देवानां यज्ञिया यज्ञियानां मनोर्यजत्रा अमृता ऋतज्ञाः । ते नो रासन्तामुरुगायमद्य यूयं पात स्वस्तिभिः सदा नः ।। १५ ।।

*परिशिष्टम्-*

शंवतीः पारयन्त्येते तं पृच्छन्ति वचो युजा । अभ्यारं तं यमाकेतुं य एवेदमिति ब्रवन् ।। १ ।। भासाकेतुं परिस्रुतं भारतीर्ब्रह्म-वर्धनीः । सञ्ज्ञानाना मही माता य एवेदमिति ब्रवत् ।। २ ।। इन्द्रस्तं किं विभुं प्रभुं भानुनेयं सरस्वतीम् । येन सूर्यमरोचयद्येनेमे रोदसी उभे ।। ३ ।। जुषस्वाग्ने अङ्गिरः काण्वं मेध्यातिथिम् । मा त्वा सोमस्य बर्बृहत् सुतस्य मधुमत्तमः ।। ४ ।। त्वमग्ने अङ्गिरः शोचस्व देववीतमः । आ शन्तम शन्तमाभिरभिष्टिभिः शान्तिः स्वस्तिमकुर्वत ।। ५ ।। शं नः कनिक्रदद्देवः पर्जन्यो अभिवर्षतु । शं नो द्यावापृथिवी शं प्रजाभ्यः शं न एधि द्विपदे शं चतुष्पदे ।। ६ ।।

(ऋ. ७/३५)

## रक्षोघ्नसूक्तम्

कृणुष्वेत्यष्टादशर्चस्य सूक्तस्य विश्वेदेवाः रक्षोहाग्निस्त्रिष्टुप्।

कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ इभेन। तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥ १ ॥ तव भ्रमास आशुया पतन्त्यनु स्पृश धृषता शोशुचानः। तपूंष्यग्ने जुह्वा पतङ्गानसन्दितो विसृज विष्वगुल्काः ॥ २ ॥ प्रति स्पशो वि सृज तूर्णितमो भवा पायुर्विशो अस्या अदब्धः। यो नो दूरे अघशंसो यो अन्त्यग्ने माकिष्टे व्यथिरादधर्षीत् ॥ ३ ॥ उदग्ने तिष्ठ प्रत्या तनुष्व न्यमित्राँ ओषतात्तिग्महेते। यो नो अरातिं समिधान चक्रे नीचा तं धक्ष्यतसं न शुष्कम् ॥ ४ ॥ ऊर्ध्वो भव प्रति विध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने। अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्र मृणीहि शत्रून् ॥ ५ ॥ स ते जानाति सुमतिं यविष्ठ य ईवते ब्रह्मणे गातुमैरत्। विश्वान्यस्मै सुदिनानि रायो द्युम्नान्यर्यो विदुरो अभि द्यौत् ॥ ६ ॥ सेदग्ने अस्तु सुभगः सुदानुर्यस्त्वा नित्येन हविषा य उक्थैः। पिप्रीषति स्व आयुषि दुरोणे विश्वेदस्मै सुदिना सासदिष्टिः ॥ ७ ॥ अर्चामि ते सुमतिं घोष्यर्वाक्सं ते वावाता जरतामियं गीः। स्वश्वास्त्वा सुरथा मर्जयेमास्मे क्षत्राणि धारयेरनु द्यून् ॥ ८ ॥ इह त्वा भूर्या चरेदुप त्मन् दोषावस्तर्दीदिवांसमनु द्यून्। क्रीडन्तस्त्वा

सुमनसः सपेमाभि द्युम्ना तस्थिवाꣳसो जनानाम् ॥ ९ ॥ यस्त्वा
स्वश्वः सुहिरण्यो अग्न उपयाति वसुमता रथेन । तस्य त्राता
भवसि तस्य सखा यस्त आतिथ्यमानुषग्जुजोषत् ॥ १० ॥
महो रुजामि बन्धुता वचोभिस्तन्मा पितुर्गोतमादन्वियाय । त्वं
नो अस्य वचसश्चिकिद्धि होतर्यविष्ठ सुक्रतो दमूनाः ॥ ११ ॥
अस्वप्नजस्तरणयः सुशेवा अतन्द्रासोऽवृका अश्रमिष्ठाः । ते
पायवः सध्रियञ्चो निषद्याग्ने तव नः पान्त्वमूर ॥ १२ ॥ ये
पायवो मामतेयं ते अग्ने पश्यन्तो अन्धं दुरितादरक्षन् । ररक्ष
तान्त्सुकृतो विश्ववेदा दिप्सन्त इद्रिपवो ना ह देभुः ॥ १३ ॥
त्वया वयꣳ सधन्यस्त्वोतास्तव प्रणीत्यश्याम वाजान् । उभा
शꣳसा सूदय सत्यतातेऽनुष्ठुया कृणुह्यह्रयाण ॥ १४ ॥ अया ते
अग्ने समिधा विधेम प्रति स्तोमꣳशस्यमानं गृभाय । दहाशसो
रक्षसः पाह्यस्मान् द्रुहो निदो मित्रमहो अवद्यात् ॥ १५ ॥
रक्षोहणं वाजिनमाऽऽजिघर्मि मित्रं प्रथिष्ठमुप यामि शर्म ।
शिशानो अग्निः क्रतुभिः समिद्धः स नो दिवा स रिषः पातु
नक्तम् ॥ वि ज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते
महित्वा । प्रादेवीर्मायाः सहते दुरेवाः शिशीते शृङ्गे रक्षसे
विनिक्षे ॥ १७ ॥ उत स्वानासो दिवि षन्त्वग्नेस्तिग्मायुधा रक्षसे

हन्तवा उ । मदे चिदस्य प्ररुजन्ति भामा न वरन्ते परिबाधो अदेवीः ॥ १८ ॥

ये देवाः पुरः सदोऽग्निनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा समूढꣳ रक्षः सन्दग्धꣳ रक्ष इदमहꣳ रक्षोऽभि सं दहाम्यग्नये रक्षोघ्ने स्वाहा ॥ १ ॥

ये देवाः दक्षिणसदो यमनेत्राः रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा समूढꣳ रक्षः सन्दग्धꣳ रक्ष इदमहꣳ रक्षोऽभि सं दहामि यमाय रक्षोघ्ने स्वाहा ॥ २ ॥

ये देवाः पश्चात्सदः सवितृनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा समूढꣳ रक्षः सन्दग्धꣳ रक्ष इदमहꣳ रक्षोऽभि सं दहामि सवित्रे रक्षोघ्ने स्वाहा ॥ ३ ॥

ये देवा उत्तरसदो वरुणनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा समूढꣳ रक्षः सन्दग्धꣳ रक्ष इदमहꣳ रक्षोऽभि सं दहामि वरुणाय रक्षोघ्ने स्वाहा ॥ ४ ॥

ये देवा उपरिषदो बृहस्पतिनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा समूढꣳ रक्षः सन्दग्धꣳ रक्ष इदमहꣳ रक्षोऽभि सं दहामि बृहस्पतये दुवस्वते रक्षोघ्ने स्वाहा ॥ ५ ॥

*(तै. सं. १-८-७)*

## ऐन्द्रसूक्तम्

आशुः शिशान इति त्रयोदशर्चस्य सूक्तस्य ऐन्द्रोऽप्रतिरथ इन्द्रश्चतुर्थ्या बृहस्पतिर्द्वादश्या अब्वा देव्यन्त्याया मरुतस्त्रिष्टुबन्त्यानुष्टुप्।

आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम्। सङ्क्रन्दनोऽनिमिष एकवीरः शतं सेना अजयत्साकमिन्द्रः ॥ १ ॥ सङ्क्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना। तदिन्द्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा ॥ २ ॥ स इषुहस्तैः स निषङ्गिभिर्वशी संस्रष्टा स युध इन्द्रो गणेन। संसृष्टजित्सोमपा बाहुशर्ध्युग्रधन्वा प्रतिहिताभिरस्ता ॥ ३ ॥ बृहस्पते परि दीया रथेन रक्षोहामित्राँ अपबाधमानः। प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम् ॥ ४ ॥ बलविज्ञायः स्थविरः प्रवीरः सहस्वान् वाजी सहमान उग्रः। अभिवीरो अभिसत्वा सहोजा जैत्रमिन्द्र रथमा तिष्ठ गोवित् ॥ ५ ॥ गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा। इमं सजाता अनु वीरयध्वमिन्द्रं सखायो अनु सं रभध्वम् ॥ ६ ॥ अभि गोत्राणि सहसा गाहमानोऽदयो वीरः शतमन्युरिन्द्रः। दुश्च्यवनः पृतनाषाळयुध्यो३ऽस्माकं सेना अवतु प्र युत्सु ॥ ७ ॥ इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः। देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम् ॥ ८ ॥ इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां

मरुतां शर्ध उग्रम् । महामनसां भुवनच्यवानां घोषो देवानां
जयतामुदस्थात् ॥ ९ ॥ उद्धर्षय मघवन्नायुधान्युत्सत्वनां
मामकानां मनांसि । उद्वृत्रहन् वाजिनां वाजिनान्युद्रथानां जयतां
यन्तु घोषाः ॥ १० ॥ अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं
या इषवस्ता जयन्तु । अस्माकं वीरा उत्तरे भवन्त्वस्माँ उ देवा
अवता हवेषु ॥ ११ ॥ अमीषां चित्तं प्रतिलोभयन्ती
गृहाणाङ्गान्यप्वे परेहि । अभि प्रेहि निर्दह हृत्सु शोकैरन्धेनामि-
त्रास्तमसा सचन्ताम् ॥ १२ ॥ प्रेता जयता नर इन्द्रो वः शर्म
यच्छतु । उग्रा वः सन्तु बाहवोऽनाधृष्या यथासथ ॥ १३ ॥

*परिशिष्टम्-*

असौ या सेना मरुतः परेषामभ्यैति न ओजसा स्पर्धमाना ।
तां गूहत तमसापव्रतेन यथामीषामन्यो अन्यं न जानात् ॥ १ ॥
अन्धा अमित्रा भवताशीर्षाणा अहय इव । तेषां वो
अग्निदग्धानामग्निमूह्ळानामिन्द्रो हन्तु वरंवरम् ॥ २ ॥

(ऋ. १०-१०३)

## नारायणपन्नम्

सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम् । विश्वं नारायणं
देवमक्षरं परमं पदम् । विश्वतः परमान्नित्यं विश्वं नारायणः
हरिम् । विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति । पतिं

विश्वस्यात्मेश्वरः शाश्वतः शिवमच्युतम् । नारायणं महाज्ञेयं विश्वात्मानं परायणम् । नारायणपरो ज्योतिरात्मा नारायणः परः । नारायणपरं ब्रह्म तत्त्वं नारायणः परः । नारायणपरो ध्याता ध्यानं नारायणः परः । यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा ।। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणःस्थितः । अनन्तमव्ययं कविः समुद्रेऽन्तं विश्वशम्भुवम् । पद्मकोश-प्रतीकाशः हृदयं चाप्यधोमुखम् । अधोनिष्ठ्यावितस्त्यान्ते नाभ्यामुपरि तिष्ठति । ज्वालमालाकुलं भाति विश्वस्यायतनं महत् । सन्ततः शिलाभिस्तुलम्बत्या कोशसन्निभम् । तस्यान्ते सुषिरः सूक्ष्मं तस्मिन्सर्वं प्रतिष्ठितम् । तस्य मध्ये महानग्निर्विश्वार्चिर्विश्वतोमुखः । सोग्रभुग्विभजन् तिष्ठन्नाहार-मजरः कविः । तिर्यगूर्ध्वमधःशायी रश्मयस्तस्य सन्तता । सन्तापयति स्वं देहमापादतलमस्तगः । तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थितः । नीलतोयदमध्यस्थाद्विद्युल्लेखेव भास्वरा । नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा । तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः । [यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः । तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ।] स ब्रह्म स शिवः स हरिः सेन्द्रः सोऽक्षरः परमस्वराट् ।।

# सर्पसूक्तम्

नमो अस्तु सर्पेभ्यो ये के च पृथिवीमनु । ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥ १ ॥ येऽदो रोचने दिवो ये वा सूर्यस्य रश्मिषु । येषामप्सु सदः कृतं तेभ्यः सर्पेभ्यो नमः ॥ २ ॥ या इषवो यातुधानानां ये वा वनस्पतीः॒ रनु । ये वाऽवटेषु शेरते तेभ्यः सर्पेभ्यो नमः ॥ ३ ॥ *(तै. सं. ४-२-८-७)*

इदः॒ सर्पेभ्यो हविरस्तु जुष्टम् । आश्लेषा येषामनुयन्ति चेतः । ये अन्तरिक्षं पृथिवीं क्षियन्ति । तेन सर्पासो हवमागमिष्ठाः ॥ समीची नामासि प्राची दिक् तस्यास्तेऽग्निरधिपतिरसितो रक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्यां नमस्तौ नो मृडयतां ते यं द्विष्मो यश्च नो द्वेष्टि तं वां जम्भे दधामि ॥

ओजस्विनी नामासि दक्षिणा दिक् तस्यास्त इन्द्रोऽधिपतिः पृदाकूरक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्यां नमस्तौ नो मृडयतां ते यं द्विष्मो यश्च नो द्वेष्टि तं वां जम्भे दधामि ॥

प्राची नामासि प्रतीची दिक् तस्यास्ते सोमोऽधिपतिः स्वजो रक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्यां नमस्तौ नो मृडयतां ते यं द्विष्मो यश्च नो द्वेष्टि तं वां जम्भे दधामि ॥

अवस्थावा नामास्युदीची दिक् तस्यास्ते वरुणोऽधिपतिस्तिरश्चराजी रक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्यां नमस्तौ नो मृडयतां ते यं द्विष्मो यश्च नो द्वेष्टि तं वां जम्भे दधामि ॥

अधिपत्नी नामासि बृहती दिक् तस्यास्ते बृहस्पतिरधिपतिः श्वित्रो रक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्यां नमस्तौ नो मृडयतां ते यं द्विष्मो यश्च नो द्वेष्टि तं वां जम्भे दधामि ॥

वशिनी नामासीयं दिक् तस्यास्ते यमोऽधिपतिः कल्माषग्रीवो रक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्यां नमस्तौ नो मृडयतां ते यं द्विष्मो यश्च नो द्वेष्टि तं वां जम्भे दधामि ॥

हेतयो नाम स्थ तेषां वः पुरो गृहा अग्निर्व इषवः सलिलो वातनामं तेभ्यो वो नमस्ते नो मृडयत ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि ॥

निलिम्पा नाम स्थ तेषां वो दक्षिणा गृहाः पितरो व इषवः सगरो वातनामं तेभ्यो वो नमस्ते नो मृडयत ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि ॥

वज्रिणो नाम स्थ तेषां वः पश्चाद् गृहाः स्वप्नो व इषवो गह्वरो वातनामं तेभ्यो वो नमस्ते नो मृडयत ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि ॥

अवस्थावानो नाम स्थ तेषां व उत्तराद् गृहा आपो व इषवः समुद्रो वातनामं तेभ्यो वो नमस्ते नो मृडयत ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि ॥

अधिपतयो नाम स्थ तेषां व उपरि गृहा वर्षं व इषवोऽवस्वान् वातनामं तेभ्यो वो नमस्ते नो मृडयत ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि ॥

क्रव्या नाम स्थ पार्थिवास्तेषां व इह गृहा अन्नं व इषवोऽनिमिषो वातनामं तेभ्यो वो नमस्ते नो मृडयत ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि ॥ *(तै. सं. ५-५-१०)*

## घर्मसूक्तम्

घर्मा समन्तेति दशर्चस्य सूक्तस्य वैरूपः सध्रिः विश्वेदेवास्त्रिष्टुप् चतुर्थी जगती ।

घर्मा समन्ता त्रिवृतं व्यापतुस्तयोर्जुष्टिं मातरिश्वा जगाम । दिवस्पयो दिधिषाणा अवेषन् विदुर्देवाः सहसामानमर्कम् ॥ १ ॥ तिस्रो देष्ट्राय निर्ऋतीरुपासते दीर्घश्रुतो वि हि जानन्ति वह्नयः । तासां नि चिक्युः कवयो निदानं परेषु या गुह्येषु व्रतेषु ॥ २ ॥ चतुष्कपर्दा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते । तस्यां सुपर्णा वृषणा निषेदतुर्यत्र देवा दधिरे भागधेयम्

॥ ३ ॥ एकः सुपर्णः स समुद्रमा विवेश स इदं विश्वं भुवनं वि चष्टे । तं पाकेन मनसापश्यमन्तितस्तं माता रेह्लि स उ रेह्लि मातरम् ॥ ४ ॥ सुपर्णं विप्राः कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति । छन्दांसि च दधतो अध्वरेषु ग्रहान्त्सोमस्य मिमते द्वादश ॥ ५ ॥ षट्त्रिंशाँश्च चतुरः कल्पयन्तश्छन्दांसि च दधत आद्वादशम् । यज्ञं विमाय कवयो मनीष ऋक्सामाभ्यां प्र रथं वर्तयन्ति ॥ ६ ॥ चतुर्दशान्ये महिमानो अस्य तं धीरा वाचा प्र णयन्ति सप्त । आप्नानं तीर्थं क इह प्र वोचद्येन पथाप्रपिबन्ते सुतस्य ॥ ७ ॥ सहस्रधा पञ्चदशान्युक्था यावद् द्यावापृथिवी तावदित्तत् । सहस्रधा महिमानः सहस्रं यावद्ब्रह्म विष्ठितं तावती वाक् ॥ ८ ॥ कश्छन्दसां योगमा वेद धीरः को धिष्ण्यां प्रति वाचं पपाद । कमृत्विजामष्टमं शूरमाहुर्हरी इन्द्रस्य नि चिकाय कः स्वित् ॥ ९ ॥ भूम्या अन्तं पर्येके चरन्ति रथस्य धूर्षु युक्तासो अस्थुः । श्रमस्य दायं वि भजन्त्येभ्यो यदा यमो भवति हर्म्ये हितः ॥ १० ॥ (ऋ. १०/११४)

## गोसूक्तम्

आगाव इत्यष्टर्चस्य बार्हस्पत्यो भरद्वाजो गावस्त्रिष्टुप् द्वितीयाद्यास्तिस्रो जगत्यः, अन्त्या अनुष्टुप् ।

आ गावो अग्मन्नुत भद्रमक्रन् त्सीदन्तु गोष्ठे रणयन्त्वस्मे । प्रजावतीः पुरुरूपा इह स्युरिन्द्राय पूर्वीरुषसो दुहानाः ॥ १ ॥ इन्द्रो यज्वने पृणते च शिक्षत्युपेद्ददाति न स्वं मुषायति । भूयो भूयो रयिमिदस्य वर्धयन्नभिन्ने खिल्ये निदधाति देवयुम् ॥ २ ॥ न ता नशन्ति न दभाति तस्करो नासामामित्रो व्यथिरा दधर्षति देवाँश्च याभिर्यजते ददाति च ज्योगित्ताभिः सचते गोपतिः सह ॥ ३ ॥ न ता अर्वा रेणुककाटो अश्नुते न संस्कृतत्रमुप यन्ति ता अभि । उरुगायमभयं तस्य ता अनु गावो मर्तस्य विचरन्ति यज्वनः ॥ ४ ॥ गावो भगो गाव इन्द्रो मे अच्छान् गावः सोमस्य प्रथमस्य भक्षः । इमा या गावः स जनास इन्द्र इच्छामीद्धृदा मनसा चिदिन्द्रम् ॥ ५ ॥ यूयं गावो मेदयथा कृशं चिदश्रीरं चित् कृणुथा सुप्रतीकम् । भद्रं गृहं कृणुथ भद्रवाचो बृहद्वो वय उच्यते सभासु ॥ ६ ॥ प्रजावतीः सूयवसं रिशन्तीः शुद्धा अपः सुप्रपाणे पिबन्तीः । मा वः स्तेन ईशत माघशंसः परि वो हेती रुद्रस्य वृज्याः ॥ ७ ॥ उपेदमुपपर्चनमासु गोषूप पृच्यताम् । उप ऋषभस्य रेतस्युपेन्द्र तव वीर्ये ॥ ८ ॥

(ऋ. ६/२८)

## रुद्रादिदेवतासूक्तानि

सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः । भवेऽभवे नातिभवे भवस्व मां भवोद्भवाय नमः ॥ १ ॥ वामदेवाय नमो ज्येष्ठाय नमश्श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमस्सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥ २ ॥ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः । सर्वेभ्यस्स-र्वसर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥ ३ ॥ तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ ४ ॥ ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधि-पतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥ ५ ॥

(तै. उप. ४-३५ - ३९)

जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः । स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥ १ ॥ तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् । दुर्गां देवीꣳ शरणमहं प्र पद्ये सुतरसि तरसे नमः ॥ २ ॥ अग्ने त्वं पारया नव्यो अस्मान्त्स्वस्तिभिरति दुर्गाणि विश्वा । पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शं योः ॥ ३ ॥ विश्वानि नो दुर्गहा जातवेदस्सिन्धुं न नावा दुरितातिपर्षि । अग्ने

अग्निवन्नमसा गृणानोऽस्माकं [गृणानो३स्माकं] बोध्यविता तनूनाम् ॥ ४ ॥

पृतनाजितः सहमानमुग्रमग्निः हुवेम परमात्सधस्थात् । स नः पर्षदति दुर्गाणि विश्वा क्षामद्देवो अति दुरितात्यग्निः ॥ ५ ॥

*(तै. उप. चतुर्थप्रश्ने आन्ध्रपाठे १६)*

तमर्वन्तमिति पञ्चर्चस्य सूक्तस्य वामदेवो गोतमः प्रथमाया अग्निर्द्वितीयतृतीययोः सोमकः साहदेव्यश्चतुर्थीपञ्चम्योः अश्विनौ गायत्री ।

तमर्वन्तं न सानसिमरुषं न दिवः शिशुम् । मर्मृज्यन्ते दिवेदिवे ॥ १ ॥ बोधद्यन्मा हरिभ्यां कुमारः साहदेव्यः । अच्छा न हूत उदरम् ॥ २ ॥ उत त्या यजता हरी कुमारात् साहदेव्यात् । प्रयता सद्य आ ददे ॥ ३ ॥

एष वां देवावश्विना ... ॥ ४ ॥

तं युवं देवावश्विना ... ॥ ५ ॥ *(पुण्याहवाचनप्रकरणे) [19 पुटे]*

*(ऋ. ४/१५/६-१०)*

या त ऊतिरिति पञ्चर्चस्य बार्हस्पत्यो भारद्वाज इन्द्रस्त्रिष्टुप् ।

या त ऊतिरवमा या परमा या मध्यमेन्द्र शुष्मिन्नस्ति । ताभिरू षु वृत्रहत्येऽवीर्न एभिश्च वाजैर्महान् न उग्र ॥ १ ॥ आभिः स्पृधो मिथतीररिषण्यन्नमित्रस्य व्यथया मन्युमिन्द्र । आभिर्विश्वा अभियुजो विषूचीरार्याय विशोऽव तारीर्दासीः ॥ २ ॥ इन्द्र

जामय उत येऽजामयोऽर्वाचीनासो वनुषो युयुज्रे । त्वमेषां विथुरा शवांसि जहि वृष्ण्यानि कृणुही पराचः ॥ ३ ॥ शूरो वा शूरं वनते शरीरैस्तनूरुचा तरुषि यत् कृण्वैते । तोके वा गोषु तनये यदप्सु वि क्रन्दसी उर्वरासु ब्रवैते ॥ ४ ॥ नहि त्वा शूरो न तुरो न धृष्णुर्न त्वा योधो मन्यमानो युयोध । इन्द्र नकिष्ट्वा प्रत्यस्त्येषां विश्वा जातान्यभ्यसि तानि ॥ ५ ॥

*(ऋ. ६/२५/१-५)*

आतून इन्द्रेति नवर्चस्य कुसिदी काण्वो गणपति (इन्द्रो) र्गायत्री ।

आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभं सङ्गृभाय । महाहस्ती दक्षिणेन ॥ १ ॥ विद्मा हि त्वा तुविकूर्मिं तुविदेष्णं तुवीमघम् । तुविमात्रमवोभिः ॥ २ ॥ नहि त्वा शूर देवा न मर्तासो दित्सन्तम् । भीमं न गां वारयन्ते ॥ ३ ॥ एतो न्विन्द्रं स्तवामेशानं वस्वः स्वराजम् । न राधसा मर्धिषन्नः ॥ ४ ॥ प्र स्तोषदुप गासिषच्छ्रवत् साम गीयमानम् । अभि राधसा जुगुरत् ॥ ५ ॥ आ नो भर दक्षिणेनाभि सव्येन प्र मृश । इन्द्र मा नो वसोर्निर्भाक् ॥ ६ ॥ उप क्रमस्वा भर धृषता धृष्णो जनानाम् । अदाशूष्टरस्य वेदः ॥ ७ ॥ इन्द्र य उ नु ते अस्ति वाजो विप्रेभिः सनित्वः । अस्माभिः सु तं सनुहि ॥ ८ ॥ सद्योजुवस्ते वाजा अस्मभ्यं विश्वश्चन्द्राः । वशैश्च मक्षू जरन्ते ॥ ९ ॥

*(ऋ. ८-८१/१-९)*

## वरुणसूक्तम्

अव ते हेळ इति द्वयोः आजीगर्तिः शुनःशेपः वरुणस्त्रिष्टुप् ।

**अव ते हेळो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः ।**
**क्षयन्नस्मभ्यमसुर प्रचेता राजन्नेनांसि शिश्रथः कृतानि ॥ १ ॥**
**उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय । अथा**
**वयमादित्य व्रते तवानागसो अदितये स्याम ॥ २ ॥**

*(ऋ. १-२४-१४, १५)*

**इमं मे वरुण श्रुधी ... ।**
**तत्त्वायामि ब्रह्मणा ... ।** *(सन्ध्यावन्दनप्रकरणे) [3 पुटे]*

त्वं नो अग्न इति वामदेवो गौतमोऽग्नीवरुणौ त्रिष्टुप् ।

**त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेळोऽव यासिसीष्ठाः ।**
**यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्र मुमुग्ध्यस्मत् ॥**

*(ऋ. ४-१-४)*

## पर्जन्यसूक्तानि

अच्छावदेति दशर्चस्य सूक्तस्य भौमोऽत्रिः पर्जन्यस्त्रिष्टुप् द्वितीयादितिस्रो जगत्यः, नवम्यनुष्टुप् ।

**अच्छा वद तवसं गीर्भिराभिः स्तुहि पर्जन्यं नमसा विवास ।**
**कनिक्रदद्वृषभो जीरदानू रेतो दधात्योषधीषु गर्भम् ॥ १ ॥ वि**
**वृक्षान् हन्त्युत हन्ति रक्षसो विश्वं बिभाय भुवनं महावधात् ।**
**उतानागा ईषते वृष्ण्यावतो यत् पर्जन्यः स्तनयन्हन्ति दुष्कृतः**

॥ २ ॥ रथीव कशयाश्वाँ अभिक्षिपन्नाविर्दूतान् कृणुते वर्ष्याँ३ अह । दूरात् सिंहस्य स्तनथा उदीरते यत् पर्जन्यः कृणुते वर्ष्यं१ नभः ॥ ३ ॥ प्र वाता वान्ति पतयन्ति विद्युत उदोषधीर्जिहते पिन्वते स्वः । इरा विश्वस्मै भुवनाय जायते यत्पर्जन्यः पृथिवीं रेतसावति ॥ ४ ॥ यस्य व्रते पृथिवी नन्नमीति यस्य व्रते शफवज्जर्भुरीति । यस्य व्रत ओषधीर्विश्वरूपाः स नः पर्जन्य महि शर्म यच्छ ॥ ५ ॥ दिवो नो वृष्टिं मरुतो ररीध्वं प्र पिन्वत वृष्णो अश्वस्य धाराः । अर्वाङेतेन स्तनयित्नुनेह्यपो निषिञ्चन्नसुरः पिता नः ॥ ६ ॥

अभि क्रन्द स्तनय गर्भमा धा उदन्वता परि दीया रथेन । दृतिं सुकर्षं विषितं न्यञ्चं समा भवन्तूद्वतो निपादाः ॥ ७ ॥ महान्तं कोशमुदचा नि षिञ्च स्यन्दन्तां कुल्या विषिता पुरस्तात् । घृतेन द्यावापृथिवी व्युन्धि सुप्रपाणं भवत्वघ्न्याभ्यः ॥ ८ ॥ यत्पर्जन्य कनिक्रदत् स्तनयन् हंसि दुष्कृतः । प्रतीदं विश्वं मोदते यत् किं च पृथिव्यामधि ॥ ९ ॥ अवर्षीर्वर्षमुदु षू गृभायाकर्धन्वान्यत्येतवा उ । अजीजन ओषधीर्भोजनाय कमुत प्रजाभ्योऽविदो मनीषाम् ॥ १० ॥

तिस्रो वाच इति षड्चस्य सूक्तस्य मैत्रावरुणिर्वसिष्ठः आग्नेयः कुमारो वा पर्जन्यस्त्रिष्टुप् ।

तिस्रो वाचः प्र वद ज्योतिरग्रा या एतद्दुह्रे मधुदोघमूधः । स
वत्सं कृण्वन् गर्भमोषधीनां सद्यो जातो वृषभो रोरवीति
॥ १ ॥ यो वर्धन ओषधीनां यो अपां यो विश्वस्य जगतो
देव ईशे । स त्रिधातु शरणं शर्म यंसत् त्रिवर्तु ज्योतिः
स्वभिष्ट्य१स्मे ॥ २ ॥ स्तरीरुत्वद्भवति सूत उत्वद्यथावशं तन्वं
चक्र एषः । पितुः पयः प्रति गृभ्णाति माता तेन पिता वर्धते
तेन पुत्रः ॥ ३ ॥ यस्मिन् विश्वानि भुवनानि तस्थुस्तिस्रो
द्यावस्त्रेधा सस्रुरापः । त्रयः कोशास उपसेचनासो मध्वः
श्चोतन्त्यभितो विरप्शम् ॥ ४ ॥ इदं वचः पर्जन्याय स्वराजे
हृदो अस्त्वन्तरं तज्जुजोषत् । मयोभुवो वृष्टयः सन्त्वस्मे
सुपिप्पला ओषधीर्देवगोपाः ॥ ५ ॥ स रेतोधा वृषभः शश्वतीनां
तस्मिन्नात्मा जगतस्तस्थुषश्च ॥ तन्म ऋतं पातु शतशारदाय
यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

पर्जन्यायेति तृचस्य सूक्तस्य वसिष्ठो मैत्रावरुणिः, आग्नेयः कुमारो वा ऋषिः । गायत्री छन्दः पर्जन्यो देवता ।

पर्जन्याय प्र गायत दिवस्पुत्राय मीह्लुषे । स नो यवसमिच्छतु
॥ १ ॥ यो गर्भमोषधीनां गवां कृणोत्यर्वताम् । पर्जन्यः
पुरुषीणाम् ॥ २ ॥ तस्मा इदास्ये हविर्जुहोता मधुमत्तमम् ।
इळां नः संयतं करत् ॥ ३ ॥

संवत्सरमिति दशर्चस्य सूक्तस्य मैत्रावरुणिर्वसिष्ठ ऋषिः। त्रिष्टुप् छन्दः, आद्या अनुष्टुप्। मण्डूकाः पर्जन्यो वा देवता।

संवत्सरं शशयाना ब्राह्मणा व्रतचारिणः। वाचं पर्जन्यजिन्वितां प्र मण्डूका अवादिषुः ॥ १ ॥ दिव्या आपो अभि यदेनमायन् दृतिं न शुष्कं सरसी शयानम्। गवामह न मायुर्वत्सिनीनां मण्डूकानां वग्नुरत्रा समेति ॥ २ ॥ यदीमेनाँ उशतो अभ्यवर्षीत् तृष्यावतः प्रावृष्यागतायाम्। अक्खलीकृत्या पितरं न पुत्रो अन्यो अन्यमुप वदन्तमेति ॥ ३ ॥ अन्यो अन्यमनु गृभ्णात्येनोरपां प्रसर्गे यदमन्दिषाताम्। मण्डूको यदभिवृष्टः कनिष्कन् पृश्निः संपृङ्क्ते हरितेन वाचम् ॥ ४ ॥ यदेषामन्यो अन्यस्य वाचं शाक्तस्येव वदति शिक्षमाणः। सर्वं तदेषां समृधेव पर्व यत्सुवाचो वदथनाध्यप्सु ॥ ५ ॥ गोमायुरेको अजमायुरेकः पृश्निरेको हरित एक एषाम्। समानं नाम बिभ्रतो विरूपाः पुरुत्रा वाचं पिपिशुर्वदन्तः ॥ ६ ॥ ब्राह्मणासो अतिरात्रे न सोमे सरो न पूर्णमभितो वदन्तः। संवत्सरस्य तदहः परि ष्ठ यन्मण्डूकाः प्रावृषीणं बभूव ॥ ७ ॥ ब्राह्मणासः सोमिनो वाचमक्रत ब्रह्म कृण्वन्तः परिवत्सरीणम्। अध्वर्यवो धर्मिणः सिष्विदाना आविर्भवन्ति गुह्या न केचित् ॥ ८ ॥ देवहितिं जुगुपुर्द्वादशस्य ऋतुं नरो न प्रमिनन्त्येते। संवत्सरे

प्रावृष्यागतायां तप्ता घर्मा अश्नुवते विसर्गम् ॥ ९ ॥
गोमायुरदादजमायुरदात् पृश्निरदाद्धरितो नो वसूनि । गवां
मण्डूका ददतः शतानि सहस्रसावे प्र तिरन्त आयुः ॥ १० ॥

*परिशिष्टम्-*

उपप्लवत मण्डूकि वर्षमा वद तादुरि । मध्ये ह्रदस्य प्लवस्व
निगृह्य चतुरः पदः ॥

*पाठान्तरम्-*

उपप्लवद मण्डूकी वर्षमा वद तादुरि । मध्ये ह्रदस्य प्लवस्य
निगृह्य चतुरः परः ॥

## शुद्धिमन्त्राः

प्राणापानव्यानोदानसमाना मे शुद्ध्यन्तां ज्योतिरहं विरजा
विपाप्मा भूयासꣳ स्वाहा ॥ १ ॥ वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणरे-
तोबुद्ध्याकूतिसङ्कल्पा मे शुद्ध्यन्तां ज्योतिरहं विरजा विपाप्मा
भूयासग्ग् स्वाहा ॥ २ ॥ त्वक्चर्ममाँसरुधिरमेदोमज्जास्ना-
यवोऽस्थीनि मे शुद्ध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासग्ग्
स्वाहा ॥ ३ ॥ शिरःपाणिपादपार्श्वपृष्ठोरूदरजङ्घाशिश्नोपस्थ-
पायवो मे शुद्ध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासग्ग् स्वाहा
॥ ४ ॥ उत्तिष्ठ पुरुष हरित पिङ्गल लोहिताक्ष देहि देहि

ददापयिता मे शुद्ध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासग्ग् स्वाहा ॥ ५ ॥ पृथिव्यापस्तेजोवायुराकाशा मे शुद्ध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासग्ग् स्वाहा ॥ ६ ॥ शब्दस्पर्शरूपरसगन्धा मे शुद्ध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासग्ग् स्वाहा ॥ ७ ॥ मनोवाक्कायकर्माणि मे शुद्ध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासग्ग् स्वाहा ॥ ८ ॥ अव्यक्तभावैरहङ्कारैर्ज्योतिरहं विरजा विपाप्मा भूयासग्ग् स्वाहा ॥ ९ ॥ आत्मा मे शुद्ध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासग्ग् स्वाहा ॥ १० ॥ अन्तरात्मा मे शुद्ध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासग्ग् स्वाहा ॥ ११ ॥ परमात्मा मे शुद्ध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासग्ग् स्वाहा ॥ १२ ॥ क्षुधे स्वाहा ॥ १३ ॥ क्षुत्पिपासाय स्वाहा ॥ १४ ॥ विविट्यै स्वाहा ॥ १५ ॥ ऋग्विधानाय स्वाहा ॥ १६ ॥ कषोत्काय स्वाहा ॥ १७ ॥ क्षुत्पिपासामलं ज्येष्ठामलक्ष्मीर्नाशयाम्यहम् । अभूतिमसमृद्धिं च सर्वां निर्णुद मे पाप्मानग्ग् स्वाहा ॥ १८ ॥ अन्नमयप्राणमयमनोमयविज्ञानमयमानन्दमयमात्मा मे शुद्ध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासग्ग् स्वाहा ॥ १९ ॥ (यदिष्टं यच्च पूर्तं यच्चापद्यनापदि । प्रजापतौ तन्मनसि जुहोमि विमुक्तोऽहं देव किल्बिषात्स्वाहा ॥)

## देवतागायत्र्यः

### तैत्तिरीयोपनिषदि

नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात् ॥ १ ॥ तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ २ ॥ तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्तिः प्रचोदयात् ॥ ३ ॥ तत्पुरुषाय विद्महे सुवर्णपक्षाय धीमहि । तन्नो गरुडः प्रचोदयात् ॥ ४ ॥ कात्यायनाय विद्महे कन्याकुमारि धीमहि । तन्नो दुर्गिः प्रचोदयात् ॥ ५ ॥ तत्पुरुषाय विद्महे महासेनाय धीमहि । तन्नः षण्मुखः प्रचोदयात् ॥ ६ ॥ वेदात्मनाय विद्महे हिरण्यगर्भाय धीमहि । तन्नो ब्रह्मा प्रचोदयात् ॥ ७ ॥ वज्रनखाय विद्महे तीक्ष्णदꣳष्ट्राय धीमहि । तन्नो नारसिंहः प्रचोदयात् ॥ ८ ॥ भास्कराय विद्महे महाद्युतिकराय धीमहि । तन्नो आदित्यः प्रचोदयात् ॥ ९ ॥ वैश्वानराय विद्महे ज्वालालीलाय धीमहि । तन्नो अग्निः प्रचोदयात् ॥ १० ॥

### देव्यथर्वशीर्षे-

महादेव्यै च विद्महे सर्वशक्त्यै च धीमहि । तन्नो लक्ष्मीः प्रचोदयात् ॥ ११ ॥

### श्रीसूक्ते-

महालक्ष्म्यै च विद्महे विष्णुपत्न्यै च धीमहि । तन्नो लक्ष्मीः प्रचोदयात् ॥ १२ ॥

### गणपत्यथर्वशीर्षे-

एकदन्ताय विद्महे वक्रतुण्डाय (गजाननाय) धीमहि । तन्नो दन्तिः प्रचोदयात् ॥ १३ ॥

### तन्त्रसमुच्चये-

शङ्कराय विद्महे नारायणाय धीमहे* । तन्नः पुरुषः प्रचोदयात् ॥ १४ ॥ कात्यायन्यै (कार्त्यायन्यै) विद्महे कन्याकुमार्यै धीमहे । तन्नो दुर्गा प्रचोदयात् ॥ १५ ॥ शक्तिहस्ताय विद्महे षडाननाय धीमहे । तन्नः स्कन्दः प्रचोदयात् ॥ १६ ॥ विनायकाय विद्महे गजवक्त्राय धीमहे । तन्नो विघ्नः प्रचोदयात् ॥ १७ ॥ भूताधिपाय विद्महे भवपुत्राय धीमहे । तन्नः शास्ता प्रचोदयात् ॥ १८ ॥ तन्महेशाय विद्महे वाग्विशुद्धाय धीमहे । तन्नः शिवः प्रचोदयात् ॥ १९ ॥ व्योमव्योमाय विद्महे व्योमेश्वराय धीमहे । तन्नो व्योमः प्रचोदयात् ॥ २० ॥ वैनतेयाय विद्महे पक्षिराजाय धीमहे । तन्नो गरुडः प्रचोदयात् ॥ २१ ॥ सौरभेयाय विद्महे महाबलाय धीमहे । तन्नो वृषः प्रचोदयात् ॥ २२ ॥ वीरभद्राय विद्महे महाननाय धीमहे । तन्नः शान्तः प्रचोदयात् ॥ २३ ॥ ब्रह्मभूतायै विद्महे कुशहस्तायै धीमहे । तन्नो ब्राह्मी प्रचोदयात् ॥ २४ ॥ महेश्वरभूतायै विद्महे शूलहस्तायै धीमहे । तन्नो माहेश्वरी प्रचोदयात् ॥ २५ ॥ स्कन्दभूतायै विद्महे शक्तिहस्तायै धीमहे । तन्नः कौमारी प्रचोदयात् ॥ २६ ॥ विष्णुभूतायै विद्महे चक्रहस्तायै धीमहे । तन्नो वैष्णवी प्रचोदयात् ॥ २७ ॥ प्रजापतिभूतायै विद्महे गदाहस्तायै धीमहे । तन्नो वाराही प्रचोदयात् ॥ २८ ॥ इन्द्रभूतायै विद्महे वज्रहस्तायै धीमहे । तन्न इन्द्राणी प्रचोदयात् ॥ २९ ॥ रुद्रभूतायै विद्महे खड्गहस्तायै धीमहे । तन्नश्चामुण्डी प्रचोदयात् ॥ ३० ॥

---

* 'धीमहि' इति सर्वत्र इत उत्तरासु गायत्रीषु पाठान्तरम् ॥

## सूर्यावर्गाः

सत्येनोत्तभितेति सप्तचत्वारिंशदृचस्य सूक्तस्य सूर्या सावित्री ऋषिका । पञ्चानां सोमो देवता, तत एकादशानां सूर्याविवाहः, सप्तदश्या देवाः, अष्टादश्याः सोमार्कौ एकोनविंश्याश्चन्द्रमाः, ततो नवानां नृणां विवाहमन्त्रा आशीःप्रायाः, ततो द्वयोर्वधूवासःसंस्पर्शनिन्दा, एकत्रिंश्या यक्ष्महा, शिष्टानामृचां सूर्या सावित्री । अनुष्टुप्, चतुर्दशी एकोनविंश्या-दितिस्रस्त्रयोविंशी चतुर्विंशी षड्विंशी षट्त्रिंशी सप्तत्रिंशी चतुश्चत्वारिंश्यश्च त्रिष्टुभः, अष्टादशी सप्तविंशी त्रिचत्वारिंश्यश्च जगत्यः, चतुस्त्रिंश्युरो-बृहती ।

सत्येनोत्तभिता भूमिः सूर्येणोत्तभिता द्यौः । ऋतेनादित्या-स्तिष्ठन्ति दिवि सोमो अधिश्रितः ॥ १ ॥ सोमेनादित्या बलिनः सोमेन पृथिवी मही । अथो नक्षत्राणामेषामुपस्थे सोम आहितः ॥ २ ॥ सोमं मन्यते पपिवान् यत् सम्पिषन्त्योषधिम् । सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति कश्चन ॥ ३ ॥ आच्छाद्विधा-नैर्गुपितो बार्हतैः सोम रक्षितः । ग्राव्णामिच्छृण्वन् तिष्ठसि न ते अश्नाति पार्थिवः ॥ ४ ॥ यत् त्वा देव प्रपिबन्ति तत आ प्यायसे पुनः । वायुः सोमस्य रक्षिता समानां मास आकृतिः ॥ ५ ॥ रैभ्यासीदनुदेयी नाराशंसी न्योचनी । सूर्याया भद्रमिद्वासो गाथयैति परिष्कृतम् ॥ ६ ॥ चित्तिरा उपबर्हणं चक्षुरा अभ्यञ्जनम् । द्यौर्भूमिः कोश आसीद्यदयात् सूर्या पतिम् ॥ ७ ॥ स्तोमा आसन्प्रतिधयः कुरीरं छन्द ओपशः । सूर्याया अश्विना

वराऽग्निरासीत्पुरोगवः ।। ८ ।। सोमो वधूयुरभवदश्विनास्तामुभा वरा । सूर्यां यत्पत्ये शंसन्तीं मनसा सविताददात् ।। ९ ।। मनो अस्या अन आसीद्द्यौरासीदुतच्छदिः । शुक्रावनड्वाहावास्तां यदयात् सूर्या गृहम् ।। १० ।। ऋक्सामाभ्यामभिहितौ गावौ ते सामनावितः । श्रोत्रं ते चक्रे आस्तां दिवि पन्थाश्चराचरः ।। ११ ।। शुची ते चक्रे यात्या व्यानो अक्ष आहतः । अनो मनस्मयं सूर्याऽऽरोहत्प्रयती पतिम् ।। १२ ।। सूर्याया वहतुः प्रागात् सविता यमवासृजत् । अघासु हन्यन्ते गावोऽर्जुन्योः पर्युह्यते ।। १३ ।। यदश्विना पृच्छमानावयातं त्रिचक्रेण वहतुं सूर्यायाः । विश्वे देवा अनु तद्वामजानन् पुत्रः पितराववृणीत पूषा ।। १४ ।। यदयातं शुभस्पती वरेयं सूर्यामुप । क्वैकं चक्रं वामासीत् क्व देष्ट्राय तस्थथुः ।। १५ ।। द्वे ते चक्रे सूर्ये ब्रह्माण ऋतुथा विदुः । अथैकं चक्रं यद्गुहा तदद्धातय इद्विदुः ।। १६ ।। सूर्यायै देवेभ्यो मित्राय वरुणाय च । ये भूतस्य प्रचेतस इदं तेभ्योऽकरं नमः ।। १७ ।। पूर्वापरं चरतो माययैतौ शिशू क्रीळन्तौ परि यातो अध्वरम् । विश्वान्यन्यो भुवनाभिचष्ट ऋतूँरन्यो विदधज्जायते पुनः ।। १८ ।। नवोनवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम् । भागं देवेभ्यो वि दधात्यायन् प्र चन्द्रमास्तिरते दीर्घमायुः ।। १९ ।। सुकिंशुकं शल्मलिं

विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रम् । आ रोह सूर्यं अमृतस्य लोकं स्योनं पत्ये वहतुं कृणुष्व ॥ २० ॥ उदीर्ष्वातः पतिवती ह्येऽेषा विश्वावसुं नमसा गीर्भिरीळे । अन्यामिच्छ पितृषदं व्यक्तां स ते भागो जनुषा तस्य विद्धि ॥ २१ ॥ उदीर्ष्वातो विश्वावसो नमसेळामहे त्वा । अन्यामिच्छ प्रफर्व्यं१सं जायां पत्या सृज ॥ २२ ॥ अनृक्षरा ऋजवः सन्तु पन्था येभिः सखायो यन्ति नो वरेयम् । समर्यमा सं भगो नो निनीयात् सं जास्पत्यं सुयममस्तु देवाः ॥ २३ ॥ प्र त्वा मुञ्चामि वरुणस्य पाशाद्येन त्वाबध्नात् सविता सुशेवः । ऋतस्य योनौ सुकृतस्य लोकेऽरिष्टां त्वा सह पत्या दधामि ॥ २४ ॥ प्रेतो मुञ्चामि नामुतः सुबद्धाममुतस्करम् । यथेयमिन्द्र मीढ्वः सुपुत्रा सुभगासति ॥ २५ ॥ पूषा त्वेतो नयतु हस्तगृह्याऽश्विना त्वा प्र वहतां रथेन । गृहान् गच्छ गृहपत्नी यथासो वशिनी त्वं विदथमा वदासि ॥ ॥ २६ ॥ इह प्रियं प्रजाया ते समृध्यतामस्मिन् गृहे गार्हपत्याय जागृहि । एना पत्या तन्वं१सं सृजस्वाऽधा जिव्री विदथमा वदाथः ॥ २७ ॥ नीललोहितं भवति कृत्यासक्तिर्व्यज्यते । एधन्ते अस्या ज्ञातयः पतिर्बन्धेषु बध्यते ॥ २८ ॥ परा देहि शामुल्यं ब्रह्मभ्यो वि भजा वसु । कृत्यैषा पद्धती भूत्वा जाया विशते पतिम् ॥ २९ ॥ अश्रीरा तनूर्भवति रुशती पापयामुया ।

पतिर्यद्वध्वो ३वाससा स्वमङ्गम- भिधित्सते ।। ३० ।। ये वध्वश्चन्द्रं वहतुं यक्ष्मा यन्ति जनादनु । पुनस्तान् यज्ञिया देवा नयन्तु यत आगताः ।। ३१ ।। मा विदन् परिपन्थिनो य आसीदन्ति दम्पती । सुगेभिर्दुर्गमतीतामप द्रान्त्वरातयः ।। ३२ ।। सुमङ्गलीरियं वधूरिमां समेत पश्यत । सौभाग्यमस्यै दत्त्वा-याऽथास्तं वि परेतन ।। ३३ ।। तृष्टमेतत्कटुकमेतदपाष्ठवद्विषवन्नै-तदत्तवे । सूर्यो यो ब्रह्मा विद्यात् स इद्वाधूयमर्हति ।। ३४ ।। आशसनं विशसनमथो अधिविकर्तनम् । सूर्यायाः पश्य रूपाणि तानि ब्रह्मा तु शुन्धति ।। ३५ ।। गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथासः । भगो अर्यमा सविता पुरन्धिर्मह्यं त्वादुर्गार्ह- पत्याय देवाः ।। ३६ ।। तां पूषञ्छिवतमामेरयस्व यस्यां बीजं मनुष्या ३ वपन्ति । या न ऊरू उशती विश्रयाते यस्यामुशन्तः प्रहराम शेपम् ।। ३७ ।। तुभ्यमग्रे पर्यवहन् त्सूर्यां वहतुना सह । पुनः पतिभ्यो जायां दा अग्ने प्रजया सह ।। ३८ ।। पुनः पत्नीमग्निरदादायुषा सह वर्चसा । दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम् ।। ३९ ।। सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः । तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ।। ४० ।। सोमो ददद्गन्धर्वाय गन्धर्वो ददद‌ग्नये । रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ।। ४१ ।।

इहैव स्तं मा वि यौष्टं विश्वमायुर्व्यश्नुतम् । क्रीळन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वे गृहे ॥ ४२ ॥ आ नः प्रजां जनयतु प्रजापतिराजरसाय समनक्त्वर्यमा । अदुर्मङ्गलीः पतिलोकमाविश शं नो भव द्विपदे शं चतुष्पदे ॥ ४३ ॥ अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः । वीरसूर्देवकामा स्योना शं नो भव द्विपदे शं चतुष्पदे ॥ ४४ ॥ इमां त्वमिन्द्र मीढ्वः सुपुत्रां सुभगां कृणु । दशास्यां पुत्राना धेहि पतिमेकादशं कृधि ॥ ४५ ॥ सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्वां भव ।ननान्दरि सम्राज्ञी भव सम्राज्ञी अधि देवृषु ॥ ४६ ॥ समञ्जन्तु विश्वे देवाः समापो हृदयानि नौ । सं मातरिश्वा सं धाता समु देष्ट्री दधातु नौ ॥ ४७ ॥

*परिशिष्टम्-*

अविधवा भव वर्षाणि शतं साग्रं तु सुव्रता । तेजस्वी च यशस्वी च धर्मपत्नी पतिव्रता ॥ १ ॥ जनयद्बहुपुत्राणि मा च दुःखं लभेत्कचित् । भर्ता ते सोमपा नित्यं भवेद्धर्मपरायणः ॥ २ ॥ अष्टपुत्रा भव त्वञ्च सुभगा च पतिव्रता । भर्तुश्चैव पितुर्भ्रातुर्हृदयानन्दिनी सदा ॥ ३ ॥ इन्द्रस्य तु यथेन्द्राणी श्रीधरस्य यथा श्रिया । शङ्करस्य यथा गौरी तद्भर्तुरपि भर्तरि ॥ ४ ॥ अत्रेर्यथानुसूया स्याद्वसिष्ठस्याप्यरुन्धती । कौशिकस्य यथा सती

तथा त्वमपि भर्तरि ॥ ५ ॥ ध्रुवैधि पोष्या मयि मह्यं त्वादाद्बृहस्पतिः । मया पत्या प्रजावती सं जीव शरदः शतम् ॥ ६ ॥ (ऋ. १०/८५)

## लक्ष्मीसूक्तानि

### १. अम्भ्रिणीसूक्तम्

अहं रुद्रेभिः इत्यष्टर्चस्य वागम्भ्रिणी आत्मा त्रिष्टुप् द्वितीया जगती।

अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः । अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा ॥ १ ॥ अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगम् । अहं दधामि द्रविणं हविष्मते सुप्राव्ये३ यजमानाय सुन्वते ॥ २ ॥ अहं राष्ट्री सङ्गमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम् । तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्यावेशयन्तीम् ॥ ३ ॥ मया सो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तम् । अमन्तवो मां त उप क्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि ॥ ४ ॥ अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः । यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥ ५ ॥ अहं रुद्राय धनुरा तनोमि ब्रह्मद्विषे शरवे हन्तवा उ । अहं जनाय समदं कृणोम्यहं द्यावा पृथिवी आ विवेश ॥ ६ ॥

अहं सुवे पितरमस्य मूर्धन् मम योनिरप्स्व१न्तः समुद्रे । ततो वि तिष्ठे भुवनानु विश्वोतामूं द्यां वर्ष्मणोप स्पृशामि ॥ ७ ॥ अहमेव वात इव प्र वाम्यारभमाणा भुवनानि विश्वा । परो दिवा पर एना पृथिव्यैतावती महिना सं बभूव ॥ ८ ॥

(ऋ. १०-१३५)

## २. केशिसूक्तम्

केश्यग्निमिति सप्तर्चस्य सूक्तस्य प्रथमायाः जूतिः, द्वितीयायाः वातजूतिः, तृतीयायाः विप्रजूतिः, चतुर्थ्याः वृषाणकः, पञ्चम्याः करिक्रतः, षष्ठ्याः एतशः, सप्तम्याः ऋष्यशृङ्गः, (एते वातरशना मुनयः) केशिनो (अग्निसूर्यवायवः) ऽनुष्टुप् ।

केश्य१ग्निं केशी विषं केशी बिभर्ति रोदसी । केशी विश्वं स्वर्दृशे केशीदं ज्योतिरुच्यते ॥ १ ॥ मुनयो वातरशनाः पिशङ्गा वसते मला । वातस्यानु ध्राजिं यन्ति यद्देवासो अविक्षत ॥ २ ॥ उन्मदिता मौनेयेन वाताँ आ तस्थिमा वयम् । शरीरेदस्माकं यूयं मर्तासो अभि पश्यथ ॥ ३ ॥ अन्तरिक्षेण पतति विश्वा रूपावचाकशत् । मुनिर्देवस्यदेवस्य सौकृत्याय सखा हितः ॥ ४ ॥ वातस्याश्वो वायोः सखाऽथो देवेषितो मुनिः । उभौ समुद्रावा क्षेति यश्च पूर्व उतापरः ॥ ५ ॥ अप्सरसां गन्धर्वाणां मृगाणां चरणे चरन् । केशी केतस्य विद्वान् त्सखा

स्वादुर्मदिन्तमः ॥ ६ ॥ वायुरस्मा उपामन्थत् पिनष्टि स्मा कुनन्नमा । केशी विषस्य पात्रेण यद्रुद्रेणापिबत् सह ॥ ७ ॥
(ऋ. १०/१३६)

## ३. कपोतसूक्तम्

उत देवा इति सप्तर्चस्य सूक्तस्य प्रथमायाः भरद्वाजः, द्वितीयायाः कश्यपः, तृतीयायाः गोतमः, चतुर्थ्या अत्रिः, पञ्चम्याः विश्वामित्रः, षष्ठ्या जमदग्निः, सप्तम्याः वसिष्ठो, विश्वेदेवा अनुष्टुप् ।

उत देवा अवहितं देवा उन्नयथा पुनः । उतागश्चक्रुषं देवा देवा जीवयथा पुनः ॥ १ ॥ द्वाविमौ वातौ वात आ सिन्धोरा परावतः । दक्षं ते अन्य आ वातु परान्यो वातु यद्रपः ॥ २ ॥ आ वात वाहि भेषजं वि वात वाहि यद्रपः । त्वं हि विश्वभेषजो देवानां दूत ईयसे ॥ ३ ॥ आ त्वागमं शन्तातिभिरथो अरिष्टतातिभिः । दक्षं ते भद्रमाभार्षं परा यक्ष्मं सुवामि ते ॥ ४ ॥ त्रायन्तामिह देवास्त्रायतां मरुतां गणः । त्रायन्तां विश्वा भूतानि यथायमरपा असत् ॥ ५ ॥ आप इद्वा उ भेषजीरापो अमीवचातनीः । आपः सर्वस्य भेषजीस्तास्ते कृण्वन्तु भेषजम् ॥ ६ ॥ हस्ताभ्यां दशशाखाभ्यां जिह्वा वाचः पुरोगवी । अनामयित्नुभ्यां त्वा ताभ्यां त्वोप स्पृशामसि ॥ ७ ॥
(ऋ. १०/१३७)

## ४. ज्ञानसूक्तम्

बृहस्पते प्रथममित्येकादशर्चस्य सूक्तस्य बृहस्पतिराङ्गिरसो ज्ञानं त्रिष्टुप् नवमी जगती ।

बृहस्पते प्रथमं वाचो अग्रं यत् प्रैरत नामधेयं दधानाः । यदेषां श्रेष्ठं यदरिप्रमासीत् प्रेणा तदेषां निहितं गुहाविः ॥ १ ॥
सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत । अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि ॥ २ ॥
यज्ञेन वाचः पदवीयमायन् तामन्वविन्दन्नृषिषु प्रविष्टाम् । तामाभृत्या व्यदधुः पुरुत्रा तां सप्त रेभा अभि सं नवन्ते ॥ ३ ॥
उत त्वः पश्यन् न ददर्श वाचमुत त्वः शृण्वन् न शृणोत्येनाम् । उतो त्वस्मै तन्वं१वि सस्रे जायेव पत्य उशती सुवासाः ॥ ४ ॥
उत त्वं सख्ये स्थिरपीतमाहुर्नैनं हिन्वन्त्यपि वाजिनेषु । अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम् ॥ ५ ॥ यस्तित्याज
सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति । यदीं शृणोत्यलकं शृणोति नहि प्रवेद सुकृतस्य पन्थाम् ॥ ६ ॥
अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः । आदघ्नास उपकक्षास उ त्वे ह्रदा इव स्नात्वा उ त्वे ददृश्रे
॥ ७ ॥ हृदा तष्टेषु मनसो जवेषु यद्ब्राह्मणाः संयजन्ते सखायः । अत्राह त्वं वि जहुर्वेद्याभिरोहब्रह्माणो वि चरन्त्यु त्वे ॥ ८ ॥ इमे ये नार्वाङ्न परश्चरन्ति न ब्राह्मणासो न

सुतेकरासः । त एते वाचमभिपद्य पापया सिरीस्तन्त्रं तन्वते अप्रजज्ञयः ।। ९ ।। सर्वे नन्दन्ति यशसागतेन सभासाहेन सख्या सखायः । किल्बषस्पृत्पितुषणिर्ह्येषामरं हितो भवति वाजिनाय ।। १० ।। ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्वरीषु । ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां वि मिमीत उ त्वः ।। ११ ।। *(ऋ. १०/७१)*

## ५. सपत्नघ्नसूक्तम्

ऋषभं मेति पञ्चर्चस्य ऋषभो वैराजः सपत्नघ्नमनुष्टुप् पञ्चमी महापङ्क्तिः ।

ऋषभं मा समानानां सपत्नानां विषासहिम् । हन्तारं शत्रूणां कृधि विराजं गोपतिं गवाम् ।। १ ।। अहमस्मि सपत्नहेन्द्र इवारिष्टो अक्षतः । अधः सपत्ना मे पदोरिमे सर्वे अभिष्ठिताः ।। २ ।। अत्रैव वोऽपि नह्याम्युभे आर्त्नी इव ज्यया । वाचस्पते नि षेधेमान् यथा मदधरं वदान् ।। ३ ।। अभिभूरहमागमं विश्वकर्मेण धाम्ना । आ वश्चित्तमा वो व्रतमा वोऽहं समितिं ददे ।। ४ ।। योगक्षेमं व आदायाहं भूयासमुत्तम आवो मूर्धानमक्रमीम् । अधस्पदान्म उद्वदत मण्डूका इवोदकान्मण्डूका उदकादिव ।। ५ ।। *(ऋ. १०/१६६)*

## ६. ध्रुवसूक्तम्

आत्वाहार्षमिति षडर्चस्य आङ्गिरसो ध्रुवो राजानुष्टुप्।

आ त्वाहार्षमन्तरेधि ध्रुवस्तिष्ठाविचाचलिः । विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधि भ्रशत् ॥ १ ॥ इहैवैधि माप च्योष्ठाः पर्वत इवाविचाचलिः । इन्द्र इवेह ध्रुवस्तिष्ठेह राष्ट्रमु धारय ॥ २ ॥ इममिन्द्रो अदीधरत् ध्रुवं ध्रुवेण हविषा । तस्मै सोमो अधि ब्रवत्तस्मा उ ब्रह्मणस्पतिः ॥ ३ ॥ ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे । ध्रुवं विश्वमिदं जगद् ध्रुवो राजा विशामयम् ॥ ४ ॥ ध्रुवं ते राजा वरुणो ध्रुवं देवो बृहस्पतिः । ध्रुवं त इन्द्रश्चाग्निश्च राष्ट्रं धारयतां ध्रुवम् ॥ ५ ॥ ध्रुवं ध्रुवेण हविषाऽभि सोमं मृशामसि । अथो त इन्द्रः केवलीर्विशो बलिहृतस्करत् ॥ ६ ॥ *(ऋ. १०/७३)*

## ७. अलक्ष्मीघ्नसूक्तम्

अरायि काण इति पञ्चर्चस्य शिरिम्बिठो भारद्वाजः ऋषिः अलक्ष्मीघ्नं देवता द्वितीयातृतीययोः ब्रह्मणस्पतिर्देवता पञ्चम्याः विश्वेदेवाः देवताः । अनुष्टुप् छन्दः ।

अरायि काणे विकटे गिरिं गच्छ सदान्वे । शिरिम्बिठस्य सत्वभिस्तेभिष्ट्वा चातयामसि ॥ १ ॥ चत्तो इतश्चत्तामुतः सर्वा भ्रूणान्यारुषी । अराय्यं ब्रह्मणस्पते तीक्ष्णशृङ्गोदृषन्निहि ॥ २ ॥ अदो यद्दारु प्लवते सिन्धोः पारे अपूरुषम् । तदा रभस्व दुर्हणो

**तेन गच्छ परस्तरम् ॥ ३ ॥ यद्ध प्राचीरजगन्तोरो मण्डूरधाणिकीः । हता इन्द्रस्य शत्रवः सर्वे बुद्बुदयाशवः ॥ ४ ॥ परीमे गामनेषत पर्यग्निमहृषत । देवेष्वक्रत श्रवः क इमाँ आ दधर्षति ॥ ५ ॥** (ऋ. १०/१५५)

## ८. वातसूक्तम्

वात आ वात्विति तृचस्य उलो वातायनो वायुर्गायत्री ।

**वात आ वातु भेषजं शम्भु मयोभु नो हृदे । प्र ण आयूँषि तारिषत् ॥ १ ॥ उत वात पितासि न उत भ्रातोत नः सखा । स नो जीवातवे कृधि ॥ २ ॥ यददो वात ते गृहे३ मृतस्य निधिर्हितः । ततो नो देहि जीवसे ॥ ३ ॥** (ऋ. १०/१८६)

परि पूषेति बार्हस्पत्यो भरद्वाजः पूषा गायत्री ।

**परि पूषा परस्ताद्धस्तं दधातु दक्षिणम् । पुनर्नो नष्टमाजतु ॥** (ऋ. ६-५४-१०)

## ९. यक्ष्मनाशनसूक्तम्

मुञ्चामि त्वेति पञ्चर्चस्य प्राजापत्यो यक्ष्मनाशन इन्द्राग्नी त्रिष्टुप् पञ्चम्यनुष्टुप् ।

**मुञ्चामि त्वा हविषा जीवनाय कमज्ञातयक्ष्मादुत राजयक्ष्मात् । ग्राहिर्जग्राह यदि वैतदेनं तस्या इन्द्राग्नी प्र मुमुक्तमेनम् ॥ १ ॥ यदि क्षितायुर्यदि वा परेतो यदि मृत्योरन्तिकं नीत एव । तमा**

हरामि निर्ऋतेरुपस्थादस्पार्षमेनं शतशारदाय ।। २ ।। सहस्राक्षेण शतशारदेन शतायुषा हविषाहार्षमेनम् । शतं यथेमं शरदो नयातीन्द्रो विश्वस्य दुरितस्य पारम् ।। ३ ।। शतं जीव शरदो वर्धमानः शतं हेमन्ताञ्छतमु वसन्तान् । शतमिन्द्राग्नी सविता बृहस्पतिः शतायुषा हविषेमं पुनर्दुः ।। ४ ।। आहार्षं त्वाविदं त्वा पुनरागाः पुनर्नव । सर्वाङ्ग सर्वं ते चक्षुः सर्वमायुश्च तेऽविदम् ।। ५ ।। (ऋ. १०/१६१)

## १०. तार्क्ष्यसूक्तम्

त्वमूष्विति तृचस्यारिष्टनेमिस्तार्क्ष्यस्तार्क्ष्यस्त्रिष्टुप् ।

त्वमू षु वाजिनं देवजूतं सहावानं तरुतारं रथानाम् । अरिष्टनेमिं पृतनाजमाशुं स्वस्तये तार्क्ष्यमिहा हुवेम ।। १ ।। इन्द्रस्येव रातिमाजोहुवानाः स्वस्तये नावमिवा रुहेम । उर्वी न पृथ्वी बहुले गभीरे मा वामेतौ मा परेतौ रिषाम ।। २ ।। सद्यश्चिद्यः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषापस्ततान । सहस्रसाः शतसा अस्य रंहिर्न स्मा वरन्ते युवतिं न शर्याम् ।। ३ ।।
(ऋ. १०/१७८)

## ११. महीसूक्तम्

महि त्रीणामिति तृचस्य सत्यधृतिर्वारुणिरादित्यो गायत्री ।

महि त्रीणामवोऽस्तु द्युक्षं मित्रस्यार्यम्णः । दुराधर्षं वरुणस्य
।। १ ।। नहि तेषाममा चन नाध्वसु वारणेषु । ईशे रिपुरघशंसः
।। २ ।। यस्मै पुत्रासो अदितेः प्र जीवसे मर्त्याय । ज्योतिर्यच्छ-
न्त्यजस्रम् ।। ३ ।। (ऋ. १०/१८५)

तच्छंयोरावृणीमहे । गातुं यज्ञाय । गातुं यज्ञपतये ।
दैवीस्वस्तिरस्तु नः । स्वस्तिर्मानुषेभ्यः । ऊर्ध्वं जिगातु
भेषजम् । शं नो अस्तु द्विपदे । शं चतुष्पद ।। ॐ शान्तिः
शान्तिः शान्तिः ।। (य. आ. तृतीयप्रश्ने अन्ते)

।। इति लक्ष्मीसूक्तानि ।।

## यक्ष्मनाशनसूक्तम्

अक्षीभ्यां त इति षण्णां विवृहा काश्यपः यक्ष्मनाशनमनुष्टुप्।

अक्षीभ्यां ते नासिकाभ्यां कर्णाभ्यां छुबुकादधि । यक्ष्मं शीर्षण्यं मस्तिष्काज्जिह्वाया वि वृहामि ते ।। १ ।। ग्रीवाभ्यस्त उष्णिहाभ्यः कीकसाभ्यो अनूक्यात् । यक्ष्मं दोषण्य१ मंसाभ्यां बाहुभ्यां वि वृहामि ते ।। २ ।। आन्त्रेभ्यस्ते गुदाभ्यो वनिष्ठोर्हृदयादधि । यक्ष्मं मतस्नाभ्यां यक्नः प्लाशिभ्यो वि वृहामि ते ।। ३ ।। ऊरुभ्यां ते अष्ठीवद्भ्यां पार्ष्णिभ्यां प्रपदाभ्याम् । यक्ष्मं श्रोणिभ्यां

भासदान्धंससो वि वृहामि ते ॥ ४ ॥ मेहनाद्वनङ्करणाल्लोमभ्यस्ते नखेभ्यः । यक्ष्मं सर्वस्मादात्मनस्तमिदं वि वृहामि ते ॥ ५ ॥ अङ्गादङ्गाल्लोम्नोलोम्नो जातं पर्वणिपर्वणि । यक्ष्मं सर्वस्मादात्मनस्तमिदं वि वृहामि ते ॥ ६ ॥ *(ऋ. १०-१६३)*

## त्रिसुपर्णसूक्तम्

ॐ शान्तिः शान्तिः शान्तिः । ब्रह्ममेतु माम् । मधुमेतु माम् । ब्रह्ममेव मधुमेतु माम् । यास्ते सोम प्रजावथ्सोऽभिसो अहम् । दुष्वप्रहं दुरुष्व ह । यास्ते सोम प्राणाग्ग्(ँ) स्तान् जुहोमि । त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात् । ब्रह्महत्यां वा एते घ्नन्ति । ये ब्राह्मणास्त्रिसुपर्णं पठन्ति । ते सोमं प्राप्नुवन्ति । आ सहस्रात् पङ्क्तिं पुनन्ति ॥

ॐ ब्रह्म मेधया । मधु मेधया । ब्रह्ममेव मधु मेधया । अद्या नो देव सवितः प्रजावथ्सावीस्सौभगम् । परा दुष्वप्नियꣳ सुव । विश्वानि देव सवितर्दुरितानि परासुव । यद्भद्रं तन्म आसुव । मधुवाता ऋतायते मधुक्षरन्ति सिन्धवः । माध्वीर्नस्सन्त्वोषधीः । मधु नक्तमुतोषसो मधुमत्पार्थिवꣳ रजः । मधु द्यौरस्तु नः पिता । मधुमान्नो वनस्पतिर्मधुमाꣳ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः । य इमं त्रिसुपर्णमयाचितं ब्राह्मणाय

दद्यात्। भ्रूणहत्यां वा एते घ्नन्ति। ये ब्राह्मणास्त्रिसुपर्णं पठन्ति। ते सोमं प्राप्नुवन्ति। आ सहस्रात् पङ्क्तिं पुनन्ति ॥

ॐ ब्रह्म मेधवा। मधु मेधवा। ब्रह्ममेव मधु मेधवा। ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम्। श्येनो गृद्‌ध्राणाꣳ स्वधितिर्वनानाꣳ सोमः पवित्रमत्येति रेभन्। हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्। नृषद्वरसदृत-सद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्। ऋचे त्वा रुचे त्वा समिथ्स्रवन्ति सरितो न धेनाः। अन्तर्हृदा मनसा पूयमानाः। घृतस्य धारा अभिचाकशीमि। हिरण्ययो वेतसो मध्य आसाम्। तस्मिन्त्सुपर्णो मधुकृत् कुलायी भजन्नास्ते मधु देवताभ्यः। तस्यासते हरयस्सप्ततीरे स्वधां दुहाना अमृतस्य धाराम्। य इदं त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात्। वीरहत्यां वा एते घ्नन्ति। ये ब्राह्मणास्त्रिसुपर्णं पठन्ति। ते सोमं प्राप्नुवन्ति। आ सहस्रात् पङ्क्तिं पुनन्ति ॥ ॐ ॥

## अन्नसूक्तानि

मूर्धानमिति बार्हस्पत्यो भरद्वाजो वैश्वानरोऽग्निस्त्रिष्टुप्।

मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम्। कविं सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः ॥

(ऋ. ६-७-१)

आमासु नृमेधपुरुमेधावङ्गिरसौ, इन्द्रो, बृहती ।

**आमासु पक्वमैरय आ सूर्यं रोहयो दिवि । धर्मं न सामन् तपता सुवृक्तिभिर्जुष्टं गिर्वणसे बृहत् ॥** *(ऋ. ८-८९-७)*

**सोमो धेनुं ... ।** *(नवग्रहप्रकरणे) [81 पुटे]*

उपह्वये दीर्घतमा औचथ्यः विश्वेदेवास्त्रिष्टुप् ।

**उप ह्वये सुदुघां धेनुमेतां सुहस्तो गोधुगुत दोहदेनाम् । श्रेष्ठं सवं सविता साविषन्नोऽभीद्धो घर्मस्तदुषु प्र वोचम् ॥**
*(ऋ. १-१६४-२६)*

**हिङ्कृण्वती ... ।** *(विवाहप्रकरणे) [73 पुटे]*

इन्द्र दृह्य गाथिनो विश्वामित्र इन्द्रस्त्रिष्टुप् ।

**इन्द्र दृह्य यामकोशा अभूवन् यज्ञाय शिक्ष गृणते सखिभ्यः । दुर्मायवो दुरेवा मर्त्यासो निषङ्गिणो रिपवो हन्त्वासः ॥**
*(ऋ. ३-३०-१५)*

वाशीमन्त श्यावाश्वः आत्रेयो मरुतो जगती ।

**वाशीमन्त ऋष्टिमन्तो मनीषिणः सुधन्वान इषुमन्तो निषङ्गिणः । स्वश्वाः स्थ सुरथाः पृश्निमातरः स्वायुधा मरुतो याथना शुभम् ॥** *(ऋ. ५-५७-२)*

चतुष्कपर्देति तिसृणां वैरूपः सध्रिः तापसो घर्मो वा, विश्वेदेवाः, त्रिष्टुप्, द्वितीया जगती ।

चतुष्कपर्दा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते । तस्यां सुपर्णा वृषणा नि षेदतुर्यत्र देवा दधिरे भागधेयम् ॥ १ ॥ एकः सुपर्णः स समुद्रमा विवेश स इदं विश्वं भुवनं वि चष्टे । तं पाकेन मनसापश्यमन्तितस्तं माता रेळ्हि स उ रेळ्हि मातरम् ॥ २ ॥ सुपर्णं विप्राः कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति । छन्दांसि च दधतो अध्वरेषु ग्रहान्त्सोमस्य मिमते द्वादश ॥ ३ ॥ *(ऋ. १०-११४-३, ४, ५)*

पितुं नु स्तोषमिति एकादशर्चस्य सूक्तस्य मैत्रावरुणिरगस्त्योऽन्नं, गायत्री, आद्यानुष्टुब्गर्भा उष्णिक् , तृतीया पञ्चम्याद्याश्चतस्रोऽनुष्टुभः, अन्त्या बृहती वा।

पितुं नु स्तोषं महो धर्माणं तविषीम् । यस्य त्रितो व्योजसा वृत्रं विपर्वमर्दयत् ॥ १ ॥ स्वादो पितो मधो पितो वयं त्वा ववृमहे । अस्माकमविता भव ॥ २ ॥ उप नः पितवा चर शिवः शिवाभिरूतिभिः । मयोभुरद्विषेण्यः सखा सुशेवो अद्वयाः ॥ ३ ॥ तव त्ये पितो रसा रजांस्यनु विष्ठिताः । दिवि वाता इव श्रिताः ॥ ४ ॥ तव त्ये पितो ददतस्तव स्वादिष्ठ ते पितो । प्र स्वाद्मानो रसानां तुविग्रीवा इवेरते ॥ ५ ॥ त्वे पितो महानां देवानां मनो हितम् । अकारि चारु केतुना तवाहिमवसावधीत् ॥ ६ ॥ यददो पितो अजगन्विवस्व

पर्वतानाम् । अत्रा चिन्नो मधो पितोऽरं भक्षाय गम्याः ॥ ७ ॥ यदपामोषधीनां परिंशमारिशामहे । वातापे पीव इद्भव ॥ ८ ॥ यत्ते सोम गवाशिरो यवाशिरो भजामहे । वातापे पीव इद्भव ॥ ९ ॥ करम्भ ओषधे भव पीवो वृक्क उदारथिः । वातापे पीव इद्भव ॥ १० ॥ तं त्वा वयं पितो वचोभिर्गावो न हव्या सुषूदिम । देवेभ्यस्त्वा सधमादमस्मभ्यं त्वा सधमादम् ॥ ११ ॥

(ऋ. १-१८७)

कया नश्चित्र इति तिसृणां वामदेवो गौतमः । इन्द्रः । गायत्री, तृतीया पादनिचृत् ।

कया नश्चित्र आ भुवदूती सदावृधः सखा । कया शचिष्ठया वृता ॥ १ ॥ कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः । दृह्ळा चिदारुजे वसु ॥ २ ॥ अभी षु णः सखीनामविता जरितॄणाम् । शतं भवास्यूतिभिः ॥ ३ ॥ (ऋ. ४/३१/१-३)

स्वादोरभक्षीति पञ्चदशर्चस्य सूक्तस्य काण्वः प्रगाथः सोमस्त्रिष्टुप्, पञ्चमी जगती ॥

स्वादोरभक्षि वयसः सुमेधाः स्वाध्यो वरिवोवित्तरस्य । विश्वे यं देवा उत मर्त्यासो मधु ब्रुवन्तो अभि सञ्चरन्ति ॥ १ ॥ अन्तश्च प्रागा अदितिर्भवास्यवयाता हरसो दैव्यस्य । इन्दविन्द्रस्य सख्यं जुषाणः श्रौष्टीव धुरमनु राय ऋध्याः ॥ २ ॥ अपाम

सोमममृता अभूमागन्म ज्योतिरविदाम देवान् । किं नूनमस्मान् कृणवदरातिः किमु धूर्तिरमृत मर्त्यस्य ॥ ३ ॥ शं नो भव हृद आ पीत इन्दो पितेव सोम सूनवे सुशेवः । सखेव सख्य उरुशंस धीरः प्र ण आयुर्जीवसे सोम तारीः ॥ ४ ॥ इमे मा पीता यशस उरुष्यवो रथं न गावः समनाह पर्वसु । ते मा रक्षन्तु विस्रसश्चरित्रादुत मा स्रामाद्यवयन्त्विन्दवः ॥ ५ ॥ अग्निं न मा मथितं सं दिदीपः प्र चक्षय कृणुहि वस्यसो नः । अथा हि ते मद आ सोम मन्ये रेवाँ इव प्र चरा पुष्टिमच्छ ॥ ६ ॥ इषिरेण ते मनसा सुतस्य भक्षीमहि पित्र्यस्येव रायः । सोम राजन् प्र ण आयूंषि तारीरहानीव सूर्यो वासराणि ॥ ७ ॥ सोम राजन्मृळया नः स्वस्ति तव स्मसि व्रत्या३स्तस्य विद्धि । अलर्ति दक्ष उत मन्युरिन्दो मा नो अर्यो अनुकामं परा दाः ॥ ८ ॥ त्वं हि नस्तन्वः सोम गोपा गात्रेगात्रे निषसत्था नृचक्षाः । यत्ते वयं प्रमिनाम व्रतानि स नो मृळ सुषखा देव वस्यः ॥ ९ ॥ ऋदूदरेण सख्या सचेय यो मा न रिष्येद्धर्यश्व पीतः । अयं यः सोमो न्यधाय्यस्मे तस्मा इन्द्रं प्रतिरमेम्यायुः ॥ १० ॥ अप त्या अस्थुरनिरा अमीवा निरत्रसन् तमिषी-चीरभैषुः । आ सोमो अस्माँ अरुहद्विहाया अगन्म यत्र प्रतिरन्त आयुः ॥ ११ ॥ यो न इन्दुः पितरो हृत्सु पीतोऽमर्त्यो मर्त्यो

आविवेश । तस्मै सोमाय हविषा विधेम मृळीके अस्य सुमतौ स्याम ॥ १२ ॥ त्वं सोम पितृभिः संविदानोऽनु द्यावापृथिवी आ ततन्थ । तस्मै त इन्दो हविषा विधेम वयं स्याम पतयो रयीणाम् ॥ १३ ॥ त्रातारो देवा अधि वोचता नो मा नो निद्रा ईशत मोत जल्पिः । वयं सोमस्य विश्वह प्रियासः सुवीरासो विदथमा वदेम ॥ १४ ॥ त्वं नः सोम विश्वतो वयोधास्त्वं स्वर्विदा विशा नृचक्षाः । त्वं न इन्द ऊतिभिः सजोषाः पाहि पश्चातादुत वा पुरस्तात् ॥ १५ ॥(ऋ. ८/४८)

हविष्कृणुष्वमित्यादष्टादशर्चस्य सूक्तस्य हर्यतः प्रागाथोऽग्निर्गायत्री ।

हविष्कृणुध्वमा गमदध्वर्युर्वनते पुनः । विद्वाँ अस्य प्रशासनम् ॥ १ ॥ नि तिग्ममभ्य१ंशुं सीदद्धोता मनावधि । जुषाणो अस्य सख्यम् ॥ २ ॥ अन्तरिच्छन्ति तं जने रुद्रं परो मनीषया । गृभ्णन्ति जिह्वया ससम् ॥ ३ ॥ जाम्यतीतपे धनुर्वयोधा अरुहद्वनम् । दृषदं जिह्वयावधीत् ॥ ४ ॥ चरन्वत्सो रुशन्निह निदातारं न विन्दते । वेति स्तोतव अम्ब्यम् ॥ ५ ॥ उतो न्वस्य यन्महदश्वावद्योजनं बृहत् । दामा रथस्य ददृशे ॥ ६ ॥ दुहन्ति सप्तैकामुप द्वा पञ्च सृजतः । तीर्थे सिन्धोरधि स्वरे ॥ ७ ॥ आ दशभिर्विवस्वत इन्द्रः कोशमचुच्यवीत् । खेदया त्रिवृता दिवः ॥ ८ ॥ परि त्रिधातुरध्वरं जूर्णिरेति नवीयसी ।

मध्वा होतारो अञ्जते ॥ ९ ॥ सिञ्चन्ति नमसावतमुच्चाचक्रं
परिज्मानम् । नीचीनबारमक्षितम् ॥ १० ॥ अभ्यारमिदद्रयो
निषिक्तं पुष्करे मधु । अवतस्य विसर्जने ॥ ११ ॥ गाव
उपावतावतं मही यज्ञस्य रप्सुदा । उभा कर्णा हिरण्यया
॥ १२ ॥ आ सुते सिञ्चत श्रियं रोदस्योरभिश्रियम् । रसा
दधीत वृषभम् ॥ १३ ॥ ते जानत स्वमोक्यं१सं वत्सासो न
मातृभिः । मिथो नसन्त जामिभिः ॥ १४ ॥ उप स्रक्केषु बप्सतः
कृण्वते धरुणं दिवि । इन्द्रे अग्ना नमः स्वः ॥ १५ ॥
अधुक्षत्पिप्युषीमिषमूर्जं सप्तपदीमरिः । सूर्यस्य सप्त रश्मिभिः
॥ १६ ॥ सोमस्य मित्रावरुणोदिता सूर आददे । तदातुरस्य
भेषजम् ॥ १७ ॥ उतो न्वस्य यत्पदं हर्यतस्य निधान्यम् ।
परि द्यां जिह्वयातनत् ॥ १८ ॥ (ऋ. ८/७२)

नवा उ देवा इति नवर्चस्य सूक्तस्य भिक्षुराङ्गिरसो धनान्नदानं त्रिष्टुबाद्ये जगत्यौ ।

न वा उ देवाः क्षुधमिद्वधं ददुरुताशितमुप गच्छन्ति मृत्यवः ।
उतो रयिः पृणतो नोप दस्यत्युतापृणन् मर्डितारं न विन्दते
॥ १ ॥ य आध्राय चकमानाय पित्वोऽन्नवान्त्सन् रफितायोप-
जग्मुषे । स्थिरं मनः कृणुते सेवते पुरोतो चित्स मर्डितारं न
विन्दते ॥ २ ॥ स इद्भोजो यो गृहवे ददात्यन्नकामाय चरते

कृशाय । अरमस्मै भवति यामहूता उतापरीषु कृणुते सखायम् ॥ ३ ॥ न स सखा यो न ददाति सख्ये सचाभुवे सचमानाय पित्वः । अपास्मात्प्रेयान्न तदोको अस्ति पृणन्तमन्यमरणं चिदिच्छेत् ॥ ४ ॥ पृणीयादिन्नाधमानाय तव्यान् द्राघीयांसमनु पश्येत पन्थाम् । ओ हि वर्तन्ते रथ्येव चक्राऽन्यमन्यमुप तिष्ठन्त रायः ॥ ५ ॥ मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत् स तस्य । नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी ॥ ६ ॥ कृषन्नित्फाल आशितं कृणोति यन्नध्वानमप वृङ्क्ते चरित्रैः । वदन्ब्रह्मावदतो वनीयान् पृणन्नापिरपृणन्तमभि ष्यात् ॥ ७ ॥ एकपाद्भूयो द्विपदो वि चक्रमे द्विपात् त्रिपादमभ्येति पश्चात् । चतुष्पादेति द्विपदामभिस्वरे सम्पश्यन् पङ्क्तीरुपतिष्ठमानः ॥ ८ ॥ समौ चिद्धस्तौ न समं विविष्टः सम्मातरा चिन्न समं दुहाते । यमयोश्चिन्न समा वीर्याणि ज्ञाती चित्सन्तौ न समं पृणीतः ॥ ९ ॥ (ऋ. १०/११७)

श्रद्धयाग्निरिति पञ्चर्चस्य श्रद्धा कामायनी श्रद्धा अनुष्टुप् ।

श्रद्धयाग्निः समिद्ध्यते श्रद्धया हूयते हविः । श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि ॥ १ ॥ प्रियं श्रद्धे ददतः प्रियं श्रद्धे दिदासतः । प्रियं भोजेषु यज्वस्विदं म उदितं कृधि ॥ २ ॥ यथा देवा असुरेषु श्रद्धामुग्रेषु चक्रिरे । एवं भोजेषु

यज्वस्वस्माकमुदितं कृधि ॥ ३ ॥ श्रद्धां देवा यजमाना वायुगोपा
उपासते । श्रद्धां हृदय्य१याकूत्या श्रद्धया विन्दते वसु ॥ ४ ॥
श्रद्धां प्रातर्हवामहे श्रद्धां मध्यन्दिनं परि । श्रद्धां सूर्यस्य निम्रुचि
श्रद्धे श्रद्धापयेह नः ॥ ५ ॥ (ऋ. १०/१५१)

## अभिश्रवणसूक्तम्

**कृणुष्वपाजः ... ।** *(रक्षोघ्नसूक्तम् - १८ ऋचः) [104-105 पुटेषु]*

इन्द्रासोमेति पञ्चविंशत्यृचस्य सूक्तस्य मैत्रावरुणिर्वसिष्ठः । इन्द्रासोमौ, अष्टमीषोडश्येकोनविंशीर्विंश्येकविंशीद्वाविंशीचतुर्विंशीनामिन्द्रः नवमीद्वादशीत्रयोदशीनां सोमः दशमीचतुर्दश्योरग्निः एकादश्या विश्वेदेवाः सप्तदश्या ग्रावाणः अष्टादश्या मरुतः त्रयोदश्या वसिष्ठाशीः पृथिव्यन्तरिक्षाणि । आद्याः षडष्टादशीद्वाविंशीत्रयोविंश्यो जगत्यन्त्यानुष्टुप् शिष्टास्त्रिष्टुप् ।

इन्द्रासोमा तपतं रक्ष उब्जतं न्यर्पयतं वृषणा तमोवृधः । परा
शृणीतमचितो न्योषतं हतं नुदेथां नि शिशीतमत्रिणः ॥ १ ॥
इन्द्रासोमा समघशंसमभ्य१घं तपुर्ययस्तु चरुरग्निवाँ इव ।
ब्रह्मद्विषे क्रव्यादे घोरचक्षसे द्वेषो धत्तमनवायं किमीदिने ॥ २ ॥
इन्द्रासोमा दुष्कृतो वव्रे अन्तरनारम्भणे तमसि प्र विध्यतम् ।
यथा नातः पुनरेकश्चनोदयत् यद्वामस्तु सहसे मन्युमच्छवः
॥ २ ॥ इन्द्रासोमा वर्तयत दिवो वधं सं पृथिव्या अघशंसाय
तर्हणम् । उत्तक्षतं स्वर्यं१ पर्वतेभ्यो येन रक्षो वावृधानं

निजूर्वथः ॥ ४ ॥ इन्द्रासोमा वर्तयतं दिवस्पर्यग्नितप्तेभिर्युवमश्महन्मभिः । तपुर्वधेभिरजरेभिरत्रिणो नि पर्शाने विध्यतं यन्तु निस्वरम् ॥ ५ ॥ इन्द्रासोमा परि वां भूतु विश्वत इयं मतिः कक्ष्याश्वेव वाजिना । यां वां होत्रां परिहिनोमि मेधयेमा ब्रह्माणि नृपतीव जिन्वतम् ॥ ६ ॥ प्रति स्मरेथां तुजयद्भिरेवैर्हतं द्रुहो रक्षसो भङ्गुरावतः । इन्द्रासोमा दुष्कृते मा सुगं भूद्यो नः कदा चिदभिदासति द्रुहा ॥ ७ ॥ यो मा पाकेन मनसा चरन्तमभिचष्टे अनृतेभिर्वचोभिः । आप इव काशिना सङ्गृभीता असन्नस्त्वासत इन्द्रवक्ता ॥ ८ ॥ ये पाकशंसं विहरन्त एवैर्ये वा भद्रं दूषयन्ति स्वधाभिः । अहये वा तान् प्रददातु सोम आ वा दधातु निर्ऋतेरुपस्थे ॥ ९ ॥ यो नो रसं दिप्सति पित्वो अग्ने यो अश्वानां यो गवां यस्तनूनाम् । रिपुः स्तेनः स्तेयकृद्दभ्रमेतु नि ष हीयतां तन्वा३तना च ॥ १० ॥ परः सो अस्तु तन्वा३तना च तिस्रः पृथिवीरधो अस्तु विश्वाः । प्रति शुष्यतु यशो अस्य देवा यो नो दिवा दिप्सति यश्च नक्तम् ॥ ११ ॥ सुविज्ञानं चिकितुषे जनाय सच्चासच्च वचसी पस्पृधाते । तयोर्यत्सत्यं यतरदृजीयस्तदित्सोमोऽवति हन्त्यासत् ॥ १२ ॥ न वा उ सोमो वृजिनं हिनोति न क्षत्रियं मिथुया धारयन्तम् । हन्ति रक्षो हन्त्यासद्वदन्तमुभाविन्द्रस्य प्रसितौ शयाते ॥ १३ ॥ यदि

वाहमनृतदेव आस मोघं वा देवाँ अप्यूहे अग्ने । किमस्मभ्यं जातवेदो हृणीषे द्रोघवाचस्ते निर्ऋथं सचन्ताम् ॥ १४ ॥ अद्या मुरीय यदि यातुधानो अस्मि यदि वायुस्ततप पूरुषस्य ॥ अधा स वीरैर्दशभिर्वि यूया यो मा मोघं यातुधानेत्याह ॥ १५ ॥ यो मायातुं यातुधानेत्याह यो वा रक्षाः शुचिरस्मीत्याह । इन्द्रस्तं हन्तु महता वधेन वश्वस्य जन्तोरधमस्पदीष्ट ॥ १६ ॥ प्र या जिगाति खर्गलेव नक्तमप द्रुहा तन्वं१ गूहमाना । वव्राँ अनन्ताँ अव सा पदीष्ट ग्रावाणो घ्नन्तु रक्षस उपब्दैः ॥ १७ ॥ वि तिष्ठध्वं मरुतो विक्ष्व१च्छत गृभायत रक्षसः सं पिनष्टन । वयो ये भूत्वी पतयन्ति नक्तभिर्ये वा रिपो दधिरे देवे अध्वरे ॥ १८ ॥ प्र वर्तय दिवो अश्मानमिन्द्र सोमशितं मघवन् त्सं शिशाधि । प्राक्तादपाक्तादधरादुदक्तादभि जहि रक्षसः पर्वतेन ॥ १९ ॥ एत उ त्ये पतयन्ति श्वयातव इन्द्रं दिप्सन्ति दिप्सवोऽदाभ्यम् । शिशीते शक्रः पिशुनेभ्यो वधं नूनं सृजदशनिं यातुमद्भ्यः ॥ २० ॥ इन्द्रो यातूनामभवत् पराशरो हविर्मथीनामभ्या३विवासताम् । अभीदु शक्रः परशुर्यथा वनं पात्रेव भिन्दन् त्सत एति रक्षसः ॥ २१ ॥ उलूकयातुं शुशुलूकयातुं जहि श्वयातुमुत कोकयातुम् । सुपर्णयातुमुत गृध्रयातुं दृषदेव प्र मृण रक्ष इन्द्र ॥ २२ ॥ मा नो रक्षो अभि

नड्यातुमावतामपोच्छतु मिथुना या किमीदिना । पृथिवी नः पार्थिवात्पात्वंहसोऽन्तरिक्षं दिव्यात् पात्वस्मान् ॥ २३ ॥ इन्द्र जहि पुमांसं यातुधानमुत स्त्रियं मायया शाशदानाम् । विग्रीवासो मूरदेवा ऋदन्तु मा ते दृशन् त्सूर्यमुच्चरन्तम् ॥ २४ ॥ प्रति चक्ष्व वि चक्ष्वेन्द्रश्च सोम जागृतम् । रक्षोभ्यो वधमस्यतमशनिं यातुमद्भ्यः ॥ २५ ॥ *(ऋ. ७/१०४/१-२५)*

**स्वादिष्ठयेत्यादि दशर्चः** । *(पुण्याहप्रकरणे) [16-17पुटे]*

**यदन्तीत्यादि द्वादशर्चः** । *(पुण्याहप्रकरणे) [18-19पुटयोः]*

**आशुः शिशानः ...** । *(इन्द्रसूक्तम्) [107पुटे]*

उदीरतामित्यष्टर्चस्य कक्षीवान् दैर्घतमस औशिज उषास्त्रिष्टुप् ।

उदीरतां सूनृता उत्पुरन्धीरुदग्नयः शुशुचानासो अस्थुः । स्पार्हा वसूनि तमसापगूह्ळाविष्कृण्वन्त्युषसो विभातीः ॥ १ ॥ अपान्यदेत्यभ्य१न्यदेति विषुरूपे अहनी सं चरेते । परिक्षितोस्तमो अन्या गुहाकरद्यौदुषाः शोशुचता रथेन ॥ २ ॥ सदृशीरद्य सदृशीरिदु श्वो दीर्घं सचन्ते वरुणस्य धाम । अनवद्यास्त्रिंशतं योजनान्येकैका क्रतुं परि यन्ति सद्यः ॥ ३ ॥ जानत्यह्नः प्रथमस्य नाम शुक्रा कृष्णादजनिष्ट श्वितीची । ऋतस्य योषा न मिनाति धामाहरहर्निष्कृतमाचरन्ती ॥ ४ ॥ कन्येव तन्वा३ शाशदानाँ एषि देवि देवमियक्षमाणम् ।

**संस्मयमाना युवतिः पुरस्तादाविर्वक्षांसि कृणुषे विभाती ॥ ५ ॥**
**सुसङ्काशा मातृमृष्टेव योषा विस्तन्वं कृणुषे दृशे कम् । भद्रा**
**त्वमुषो वितरं व्युच्छ न तत्ते अन्या उषसो नशन्त ॥ ६ ॥**
**अश्वावतीर्गोमतीर्विश्ववारा यतमाना रश्मिभिः सूर्यस्य । परा**
**च यन्ति पुनरा च यन्ति भद्रा नाम वहमाना उषासः ॥ ७ ॥**
**ऋतस्य रश्मिमनुयच्छमाना भद्रंभद्रं क्रतुमस्मासु धेहि । उषो**
**नो अद्य सुहवा व्युच्छास्मासु रायो मघवत्सु च स्युः ॥ ८ ॥**
*(ऋ. १/१२३/६-१३)*

## श्राद्धमन्त्राः

पवित्रवन्त इति पवित्र आङ्गिरसः पवमानः सोमो जगती ।

**पवित्रवन्तः परि वाचमासते पितैषां प्रत्नो अभि रक्षति व्रतम् ।**
**महः समुद्रं वरुणस्तिरो दधे धीरा इच्छेकुर्धरुणेष्वारभम् ॥**
*(ऋ. ९-७३-३)*

सहस्रधारे पवित्र आङ्गिरसः पवमानः सोमो जगती ।

**सहस्रधारे वितते पवित्र आ वाचं पुनन्ति कवयो मनीषिणः ।**
**रुद्रास एषामिषिरासो अद्रुहः स्पशः स्वञ्चः सुदृशो नृचक्षसः ॥**
*(ऋ. ९-७३-७)*

**स्योना पृथिवी ... ।** *(नवग्रहप्रकरणे) [77 पुटे]*

इदं ते पात्रं वैरूपो नभःप्रभेदन इन्द्रस्त्रिष्टुप् ।

**इदं ते पात्रं सनवित्तमिन्द्र पिबा सोममेना शतक्रतो । पूर्ण आहावो मदिरस्य मध्वो यं विश्व इदभिहर्यन्ति देवाः ॥**

*(ऋ. १०-११२-६)*

**इमं मे गङ्गे ... ।** *(पुण्याहप्रकरणे) [10 पुटे]*

शरासो मैत्रावरुणिरसृणसूर्या अनुष्टुप् ।

**शरासः कुशरासो दर्भासः सैर्या उत । मौञ्जा अदृष्टा बैरिणाः सर्वे साकं न्यलिप्सत ॥** *(ऋ. १-१९१-३)*

**गन्धद्वारां ... ।**
**अर्चत प्रार्चत ... ।**
**आयने ते ... ।**
*[पुण्याहप्रकरणे] [11 पुटे]*

**हिरण्यरूपः ... ।** *(श्रीसूक्ते) [33 पुटे]*

**ममाग्ने ... ।** *(समावर्तनप्रकरणे) [71-72 पुटयोः]*

**विष्णोर्नुकं ... ।** *(विष्णुसूक्ते) [72 पुटे]*

**सहस्रशीर्षा ... ।** *(पुरुषसूक्ते) [31 पुटे]*

**तद्विष्णोः ... ।** *(विष्णुसूक्ते) [44 पुटे]*

**शं नो देवीः ... ।** *(पुण्याहवाचनप्रकरणे) [15 पुटे]*

रूपंरूपं गर्गो भारद्वाज इन्द्रस्त्रिष्टुप् ।

**रूपंरूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय । इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश ॥**

*(ऋ. ६-४७-१८)*

उदीरतां शङ्खो यामायनः पितरस्त्रिष्टुप् ।

उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः । असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥

(ऋ. १०-१५-१)

विश्वे देवासो गृत्समदो भार्गवः शौनको विश्वे देवाः गायत्री ।

विश्वे देवास आ गत शृणुता म इमं हवम् । एदं बर्हिर्नि षीदत ॥

(ऋ. २-४१-१३)

विश्वे देवाः ऋजिश्वा भारद्वाजो विश्वेदेवास्त्रिष्टुप् ।

विश्वे देवाः शृणुतेमं हवं मे ये अन्तरिक्षे य उप द्यवि ष्ठ । ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वम् ॥

(ऋ. ६-५२-१३)

या दिव्या आपः पृथिवि सम्बभूवुर्या अन्तरिक्ष्या उत पार्थिवीर्याः । हिरण्यवर्णा यज्ञियास्ता न आपः शं स्योना भवन्तु ॥

नमो महद्भ्य इति आजीगर्तिः शुनःशेपः स कृत्रिमो वैश्वामित्रो देवरातो देवास्त्रिष्टुप् ।

नमो महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यो नम आशिनेभ्यः । यजाम देवान्यदि शक्रवाम मा ज्यायसः शंसमा वृक्षि देवाः ॥

(ऋ. १-२७-१३)

उशन्तस्त्वा दमनो यामायनोऽग्निरनुष्टुप् ।

उशन्तस्त्वा नि धीमह्युशन्तः समिधीमहि । उशन्नुशत आ वह पितॄन् हविषे अत्तवे ॥ (ऋ. १०-१६-१२)

आयन्तुः नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः । अस्मिन्यज्ञे स्वधया मदन्त्वधि ब्रुवन्तु तेऽवन्त्वस्मान् ॥ (ब्र. समुच्चये)

ये देवासः परुच्छेपो दैवोदासिर्विश्वे देवास्त्रिष्टुप् ।

ये देवासो दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ । अप्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम् ॥ (ऋ. १-१३९-११)

ये चेहेति शङ्खो यामयनः पितरस्त्रिष्टुप् ।

ये चेह पितरो ये च नेह याँश्च विद्म याँ उ च न प्रविद्म । त्वं वेत्थ यति ते जातवेदः स्वधाभिर्यज्ञं सुकृतं जुषस्व ॥ (ऋ. १०-१५-१३)

श्रद्धायां प्राणे निविष्टोऽमृतं जुहोमि । शिवो मा विशा प्रदाहाय । प्राणाय स्वाहा ॥

श्रद्धायामपाने निविष्टोऽमृतं जुहोमि । शिवो मा विशा प्रदाहाय । अपानाय स्वाहा ॥

श्रद्धायां व्याने निविष्टोऽमृतं जुहोमि । शिवो मा विशा प्रदाहाय । व्यानाय स्वाहा ॥

श्रद्धायामुदाने निविष्टोऽमृतं जुहोमि । शिवो मा विशा प्रदाहाय । उदानाय स्वाहा ॥

श्रद्धायाः समाने निविष्टोऽमृतं जुहोमि । शिवो मा विशा प्रदाहाय । समानाय स्वाहा ॥

श्रद्धायां प्राणे निविश्यामृतः हुतम् । प्राणमन्नेनाप्यायस्व ॥

श्रद्धायामपाने निविश्यामृतः हुतम् । अपानमन्नेनाप्यायस्व ॥

श्रद्धायां व्याने निविश्यामृतः हुतम् । व्यानमन्नेनाप्यायस्व ॥

श्रद्धायामुदाने निविश्यामृतः हुतम् । उदानमन्नेनाप्यायस्व ॥

श्रद्धायाः समाने निविश्यामृतः हुतम् । समानमन्नेनाप्यायस्व ॥
*(तै. उप. आन्ध्रपाठे चतुर्थप्रश्ने ११)*

मधुवाता ... । *(देवपूजाप्रकरणे) [8 पुटे]*

उपास्मै गायता ... । *(नान्दीमुखप्रकरणे) [21 पुटे]*

मनो न्वेति तिसृणां बन्धुः श्रुतबन्धुर्विप्रबन्धुर्गौपायना विश्वे देवाः गायत्री ।

मनो न्वा हुवामहे नाराशंसेन सोमेन । पितृणां च मन्मभिः ॥ १ ॥ आत एतु मनः पुनः क्रत्वे दक्षाय जीवसे । ज्योक् च सूर्यं दृशे ॥ २ ॥ पुनर्नः पितरो मनो ददातु दैव्यो जनः । जीवं व्रातं सचेमहि ॥ ३ ॥ *(ऋ. १०-५७/३-५)*

स्वादुषंसद इति द्वयोः पायुर्भारद्वाजः प्रथमायाः रथगोपास्त्रिष्टुप् द्वितीयायाः ब्राह्मणपितृसोमद्यावापृथिवीपूषाणो जगती ।

स्वादुषंसदः पितरो वयोधाः कृच्छ्रेश्रितः शक्तीवन्तो गभीराः । चित्रसेना इषुबला अमृध्राः सतोवीरा उरवो व्रातसाहाः ॥ १ ॥ ब्राह्मणासः पितरः सोम्यासः शिवे नो द्यावापृथिवी अनेहसा । पूषा नः पातु दुरिताहृतावृधो रक्षा माकिर्नो अघशंस ईशत ॥ २ ॥

(ऋ. ६-७५/९, १०)

इदं पितृभ्यः शङ्खो यामायनः पितरस्त्रिष्टुप् ।

इदं पितृभ्यो नमो अस्त्वद्य ये पूर्वासो य उपरास ईयुः । ये पार्थिवे रजस्या निषत्ता ये वा नूनं सुवृजनासु विक्षु ॥

*(ऋ. १०-१५-२)*

इहैवस्तं ... । *(सूर्यावर्गे) (130पुटे ४२तमो मन्त्रः)*

अग्ने तमिति वामदेवा गौतमोऽग्निः पदपङ्क्तिः ।

अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रं हृदिस्पृशम् । ऋध्यामा त ओहैः ॥

*(ऋ. ४-१०-१)*

यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिंसिम । अग्निर्मा तस्मादेनसो गार्हपत्यः प्र मुञ्चतु दुरिता यानि चकृम करोतु मामनेनसम् ॥

*(तै. सं. १-८-५-१३)*

वसिष्ठास इति द्वयोः वसुकर्णो वासुको विश्वेदेवाः जगती द्वितीया त्रिष्टुप्।

**वसिष्ठासः पितृवद्वाचमक्रत देवाँ ईळाना ऋषिवत् स्वस्तये । प्रीता इव ज्ञातयः काममेत्यास्मे देवासोऽव धूनुता वसु ॥ १ ॥ देवान् वसिष्ठो अमृतान् ववन्दे ये विश्वा भुवनाभि प्रतस्थुः । ते नो रासन्तामुरुगायमद्य यूयं पात स्वस्तिभिः सदा नः ॥ २ ॥**

(ऋ. १०/६६/१४, १५)

वाजेवाजेऽवत इति मैत्रावरुणिर्वसिष्ठो वाजिनस्त्रिष्टुप्।

**वाजेवाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः । अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः ॥**

(ऋ. ७-३८-८)

## और्ध्वदेहिकमन्त्राः

नानानमिति चतुर्ऋचस्य सूक्तस्य शिशुराङ्गिरसः पवमानः सोमः पङ्क्तिः।

**नानानं वा उ नो धियो वि व्रतानि जनानाम् । तक्षा रिष्टं रुतं भिषग् ब्रह्मा सुन्वन्तमिच्छतीन्द्रायेन्दो परि स्रव ॥ १ ॥ जरतीभिरोषधीभिः पर्णेभिः शकुनानाम् । कार्मारो अश्मभिर्द्युभिर्हिरण्यवन्तमिच्छतीन्द्रायेन्दो परि स्रव ॥ २ ॥ कारुरहं ततो भिषगुपलप्रक्षिणी नना । नानाधियो वसूयवोऽनु गा इव**

तस्थिमेन्द्रायेन्दो परि स्रव ॥ ३ ॥ अश्वो वोह्ळा सुखं रथं हसनामुपमन्त्रिणः । शेपो रोमण्वन्तौ भेदौ वारिन्मण्डूक इच्छतीन्द्रायेन्दो परि स्रव ॥ ४ ॥ (ऋ. ९-११२)

शर्यणावतीत्येकादशर्चस्य काश्यपो मारीचः पवमानः सोमः पङ्क्तिः ।

शर्यणावति सोममिन्द्रः पिबतु वृत्रहा । बलं दधान आत्मनि करिष्यन्वीर्यं महदिन्द्रायेन्दो परि स्रव ॥ १ ॥ आ पवस्व दिशां पत आर्जीकात्सोम मीढ्वः । ऋतवाकेन सत्येन श्रद्धया तपसा सुत इन्द्रायेन्दो परि स्रव ॥ २ ॥ पर्जन्यवृद्धं महिषं तं सूर्यस्य दुहिताभरत् । तं गन्धर्वाः प्रत्यगृभ्णन् तं सोमे रसमादधुरिन्द्रायेन्दो परि स्रव ॥ ३ ॥ ऋतं वदन्नृतद्युम्न सत्यं वदन् त्सत्यकर्मन् । श्रद्धां वदन् त्सोम राजन् धात्रा सोम परिष्कृत इन्द्रायेन्दो परि स्रव ॥ ४ ॥ सत्यमुग्रस्य बृहतः सं स्रवन्ति संस्रवाः । सं यन्ति रसिनो रसाः पुनानो ब्रह्मणा हर इन्द्रायेन्दो परि स्रव ॥ ५ ॥ यत्र ब्रह्मा पवमान छन्दस्यां३ वाचं वदन् । ग्राव्णा सोमे महीयते सोमेनानन्दं जनयन्निन्द्रायेन्दो परि स्रव ॥ ६ ॥ यत्र ज्योतिरजस्रं यस्मिन् लोके स्वर्हितम् । तस्मिन् मां धेहि पवमानाऽमृते लोके अक्षित इन्द्रायेन्दो परि स्रव ॥ ७ ॥ यत्र राजा वैवस्वतो यत्रावरोधनं दिवः । यत्रामूर्यह्वतीरापस्तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव ॥ ८ ॥

यत्रानुकामं चरणं त्रिनाके त्रिदिवे दिवः । लोका यत्र ज्योतिष्मन्ततत्र माममृतं कृधीन्द्रायेन्दो परि स्रव ॥ ९ ॥ यत्र कामा निकामाश्च यत्र ब्रध्नस्य विष्टपम् । स्वधा च यत्र तृप्तिश्च तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव ॥ १० ॥ यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते । कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव ॥ ११ ॥ (ऋ. ९-११३)

य इन्दोरिति चतुर्ऋचस्य सूक्तस्य कश्यपो मारीचः पवमानः सोमः पङ्क्तिः ।

य इन्दोः पवमानस्यानु धामान्यक्रमीत् । तमाहुः सुप्रजा इति यस्ते सोमाविधन्मन इन्द्रायेन्दो परिस्रव ॥ १ ॥ ऋषेमन्त्रकृतां स्तोमैः कश्यपोद्वर्धयन् गिरः । सोमं नमस्य राजानं यो जज्ञे वीरुधां पतिरिन्द्रायेन्दो परिस्रव ॥ २ ॥ सप्त दिशो नाना सूर्याः सप्त होतार ऋत्विजः । देवा आदित्या ये सप्त तेभिः सोमाभिरक्ष न इन्द्रायेन्दो परिस्रव ॥ ३ ॥ यत् ते राजञ्छृतं हविस्तेन सोमाभिरक्ष नः । अरातीवा मा नस्तारीन्मो च नः किं चनाममदिन्द्रायेन्दो परिस्रव ॥ ४ ॥ (ऋ. ९/११४)

इमे जीवाः सङ्कुसुको यामायनो मृत्युस्त्रिष्टुप् ।

इमे जीवा वि मृतैराववृत्रन्नभूद्भद्रा देवहूतिर्नो अद्य । प्राञ्चो
अगाम नृतये हसाय द्राघीय आयुः प्रतरं दधानाः ॥
(ऋ. १०-१८-३)

अतिद्रवेति द्वयोर्वैवस्वतो यमः श्वानौ त्रिष्टुप् ।

अति द्रव सारमेयौ श्वानौ चतुरक्षौ शबलौ साधुना पथा । अथा
पितॄन् त्सुविदत्राँ उपेहि यमेन ये सधमादं मदन्ति ॥ १ ॥ यौ
ते श्वानौ यम रक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसौ । ताभ्यामेनं
परि देहि राजन् त्स्वस्ति चास्मा अनमीवं च धेहि ॥ २ ॥
(ऋ. १०/१४/११, १२)

उप सर्पेति सङ्कुसुको यामायनः पितृमेधस्त्रिष्टुप् ।

उप सर्प मातरं भूमिमेतामुरुव्यचसं पृथिवीं सुशेवाम् । ऊर्णम्रदा
युवतिर्दक्षिणावत एषा त्वा पातु निर्ऋतेरुपस्थात् ॥
(ऋ. १०-१८-१०)

अपेत वैवस्वतो यमः पितरस्त्रिष्टुप् ।

अपेत वीत वि च सर्पतातोऽस्मा एतं पितरो लोकमक्रन् ।
अहोभिरद्भिरक्तुभिर्व्यक्तं यमो ददात्यवसानमस्मै ॥
(ऋ. १०-१४-९)

इममग्ने दमनो यामायनोऽग्निस्त्रिष्टुप् ।

इममग्ने चमसं मा वि जिह्वरः प्रियो देवानामुत सोम्यानाम् ।
एष यश्चमसो देवपानस्तस्मिन् देवा अमृता मादयन्ते ॥
(ऋ. १०-१६-८)

अग्नेर्वर्म दमनो यामायनोऽग्निस्त्रिष्टुप्।

अग्नेर्वर्म परि गोभिर्व्ययस्व सं प्रोर्णुष्व पीवसा मेदसा च। नेत् त्वा धृष्णुर्हरसा जर्हृषाणो दधृग्विधक्ष्यन् पर्यङ्खयाते ॥
(ऋ. १०-१६-७)

क्रव्यादं दमनो यामायनोऽग्निस्त्रिष्टुप्।

क्रव्यादमग्निं प्र हिणोमि दूरं यमराज्ञो गच्छतु रिप्रवाहः। इहैवायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन् ॥
(ऋ. १०-१६-९)

वातास्ते वान्तु पथि पुण्यगन्धा मनःसुखा गात्रसुखानुलोमाः। त्वचः सुखा मांससुखा अस्थिसौख्या वहन्तु त्वां मरुतः सुकृतां यत्र लोकाः ॥ इमा आपो मधुमत्योऽस्मिंस्ते लोक उप दुह्यन्तामक्षीयमाणाः स्वधा नमः। इमा आपो मधुमत्योऽन्तरिक्षे ते लोक उप दुह्यन्तामक्षीयमाणाः स्वधा नमः। इमा आपो मधुमत्यः स्वर्गे ते लोक उप दुह्यन्तामक्षीयमाणाः स्वधा नमः ॥

प्रेहि प्रेहीति द्वयोः वैवस्वतो यमः पितरस्त्रिष्टुप्।

प्रेहि प्रेहि पथिभिः पूर्व्येभिर्यत्रा नः पूर्वे पितरः परेयुः। उभा राजाना स्वधया मदन्ता यमं पश्यासि वरुणं च देवम् ॥ १ ॥

सं गच्छस्व पितृभिः सं यमेनेष्टापूर्तेन परमे व्योमन् । हित्वायावद्यं पुनरस्तमेहि सं गच्छस्व तन्वा सुवर्चाः ॥ २ ॥

(ऋ. १०-१४-७, ८)

मैनमिति षण्णां यामायनो दमनोऽग्निस्त्रिष्टुप् ।

नमग्ने वि दहो माभि शोचो मास्य त्वचं चिक्षिपो मा शरीरम् ।
दा शृतं कृणवो जातवेदोऽथेमेनं प्र हिणुतात् पितृभ्यः ॥ १ ॥
यदा करसि जातवेदोऽथेमेनं परिदत्तात् पितृभ्यः । यदा
गत्यसुनीतिमेतामथा देवानां वशनीर्भवाति ॥ २ ॥ सूर्यं
र्गच्छतु वातमात्मा द्यां च गच्छ पृथिवीं च धर्मणा । अपो
गच्छ यदि तत्र ते हितमोषधीषु प्रति तिष्ठा शरीरैः ॥ ३ ॥
जो भागस्तपसा सं तपस्व तं ते शोचिस्तपतु तं ते अर्चिः ।
स्ते शिवास्तन्वो जातवेदस्ताभिर्वहैनं सुकृतामु लोकम् ॥ ४ ॥
त्र सृज पुनरग्ने पितृभ्यो यस्त आहुतश्चरति स्वधाभिः ।
युर्वसान उप वेतु शेषः सं गच्छतां तन्वा जातवेदः ॥ ५ ॥
ते कृष्णः शकुन आतुतोद पिपीलः सर्प उत वा श्वापदः ।
ग्निष्टद्विश्वादगदं कृणोतु सोमश्च यो ब्राह्मणाँ आविवेश ॥ ६ ॥

(ऋ. १०/१६/१-६)

पूषात्वेति चतसृणां यामायनो देवश्रवाः पूषा त्रिष्टुप् ।

ा त्वेतश्च्यावयतु प्र विद्वाननष्टपशुर्भुवनस्य गोपाः । स
भ्यः परि ददत् पितृभ्योऽग्निर्देवेभ्यः सुविदत्रियेभ्यः ॥ १ ॥

आयुर्विश्वायुः परि पासति त्वा पूषा त्वा पातु प्रपथे पुरस्तात् । यत्रासते सुकृतो यत्र ते ययुस्तत्र त्वा देवः सविता दधातु ॥ २ ॥ पूषेमा आशा अनु वेद सर्वाः सो अस्माँ अभयतमेन नेषत् । स्वस्तिदा आघृणिः सर्ववीरोऽप्रयुच्छन् पुर एतु प्रजानन् ॥ ३ ॥ प्रपथे पथामजनिष्ट पूषा प्रपथे दिवः प्रपथे पृथिव्याः । उभे अभि प्रियतमे सधस्थे आ च परा च चरति प्रजानन् ॥ ४ ॥ (ऋ. १०/१७/३-६)

उप सर्पमातरमिति चतसृणां सङ्कुसुको यामायनः पितृमेधस्त्रिष्टुप् । द्वितीया प्रस्तारपङ्क्तिः तृतीया जगती ।

उप सर्प मातरं भूमिमेतामुरुव्यचसं पृथिवीं सुशेवाम् । ऊर्णम्रदा युवतिर्दक्षिणावत एषा त्वा पातु निर्ऋतेरुपस्थात् ॥ १ ॥ उच्छ्वञ्चस्व पृथिवि मा नि बाधथाः सूपायनास्मै भव सूपवञ्चना । माता पुत्रं यथा सिचाऽभ्येनं भूम ऊर्णुहि ॥ २ ॥ उच्छ्वञ्चमाना पृथिवी सु तिष्ठतु सहस्रं मित उप हि श्रयन्ताम् । ते गृहासो घृतश्चुतो भवन्तु विश्वाहास्मै शरणाः सन्त्वत्र ॥ ३ ॥ उत्ते स्तभ्नामि पृथिवीं त्वत् परीमं लोगं निदधन्मो अहं रिषम् । एतां स्थूणां पितरो धारयन्तु तेऽत्रा यमः सादना ते मिनोतु ॥ ४ ॥ (ऋ. १०/१८/१०-१३)

सोम एकेभ्य इति पञ्चानां वैवस्वती यमी भाववृत्तमनुष्टुप्।

**सोम एकेभ्यः पवते घृतमेक उपासते । येभ्यो मधु प्रधावति ताँश्चिदेवापि गच्छतात् ।। १ ।। तपसा ये अनाधृष्यास्तपसा ये स्वर्ययुः । तपो ये चक्रिरे महस्ताँश्चिदेवापि गच्छतात् ।। २ ।। ये युध्यन्ते प्रधनेषु शूरासो ये तनूत्यजः । ये वा सहस्रदक्षिणास्ताँश्चिदेवापि गच्छतात् ।। ३ ।। ये चित् पूर्व ऋतसाप ऋतावान ऋतावृधः । पितॄन् तपस्वतो यम ताँश्चिदेवापि गच्छतात् ।। ४ ।।** *(ऋ. १०/१५४)*

उरूणासाविति वैवस्वतो यमः श्वानौ त्रिष्टुप्।

**उरूणसावसुतृपा उदुम्बलौ यमस्य दूतौ जरतो जनाँ अनु । तावस्मभ्यं दृशये सूर्याय पुनर्दातामसुमद्येह भद्रम् ।।** *(ऋ. १०-१४-१२)*

शीतिके इति दमो यामायनोऽग्निस्त्रिष्टुप्।

**शीतिके शीतिकावति ह्लादिके ह्लादिकावति । मण्डूक्या ३सु सं गम इमं स्व१ग्निं हर्षय ।।** *(ऋ. १०-१६-१४)*

इदं त इति बृहदुक्थो वामदेव्यो विश्वेदेवास्त्रिष्टुप्।

**इदं त एकं पर ऊ त एकं तृतीयेन ज्योतिषा सं विशस्व । संवेशने तन्व१श्चारुरेधि प्रियो देवानां परमे जनित्रे ।।** *(ऋ. १०-५६-१)*

## धनिष्ठापञ्चकमन्त्राः

ज्मया अत्र मैत्रावरुणिर्वसिष्ठो वसवः (विश्वेदेवाः) त्रिष्टुप् ।

**ज्मया अत्र वसवो रन्त देवा उरावन्तरिक्षे मर्जयन्त शुभ्राः । अर्वाक्पथ उरुज्रयः कृणुध्वं श्रोता दूतस्य जग्मुषो नो अस्य ॥**

*(ऋ. ७-३९-३)*

**तत्त्वा यामि ... ।** *(सन्ध्यावन्दनप्रकरणे) [3 पुटे]*

अभि ये मिथो मैत्रावरुणिर्वसिष्ठोऽहिर्बुध्न्यः (सविता) त्रिष्टुप् ।

**अभि ये मिथो वनुषः सपन्ते रातिं दिवो रातिषाचः पृथिव्याः । अहिर्बुध्न्य उत नः शृणोतु वरूत्र्येक धेनुभिर्निपातु ॥**

*(ऋ. ७-३८-५)*

उत न ऋजिश्वा भारद्वाजोऽजैकपात् (विश्वे देवाः) त्रिष्टुप् ।

**उत नोऽहिबुध्न्यः शृणोत्वज एकपात् पृथिवी समुद्रः । विश्वे देवा ऋतावृधो हुवानाः स्तुता मन्त्राः कविशस्ता अवन्तु ॥**

*(ऋ. ६-५०-१४)*

पूषा गा बार्हस्पत्यो भरद्वाजः पूषा गायत्री ।

**पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः । पूषा वाजं सनोतु नः ॥**

*(ऋ. ६-५४-५)*

## त्रिपादशान्तिमन्त्राः

(सर्वत्र-प्रथमतः नक्षत्रदेवतायाः ततः अधिदेवतायाः ततः प्रत्यधिदेवतायाश्च मन्त्राः ।

**कृत्तिका-**

**अग्निं दूतं ... ।** *(नवग्रहप्रकरणे) [76 पुटे]*

**यमाय सोमं ... ।** *(नवग्रहप्रकरणे) [79 पुटे]*

**प्रजापते ... ।** *(गर्भाधानप्रकरणे) [60 पुटे]*

**पुनर्वसु-** अदितिर्द्यौर्गोतमो राहूगणोऽदितिस्त्रिष्टुप् ।

**अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः । विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम् ॥**

*(ऋ. १-८९-१०)*

**कद्रुद्राय प्रचेतसे ... ।** *(नवग्रहप्रकरणे) [76 पुटे]*

**बृहस्पते अतियत् ... ।** *(नवग्रहप्रकरणे) [78 पुटे]*

उत्तरा- अर्यमा णो अदितिः प्रजापतिर्वैश्वामित्रोऽर्यमा (विश्वेदेवाः) त्रिष्टुप् ।

**अर्यमा णो अदितिर्यज्ञियासोऽदब्धानि वरुणस्य व्रतानि । युयोत नो अनपत्यानि गन्तोः प्रजावान् नः पशुमाँ अस्तु गातुः ॥**

*(ऋ. ३-५४-१८)*

भगएवेति मैत्रावरुणिर्वसिष्ठो भगस्त्रिष्टुप् ।

**भग एव भगवाँ अस्तु देवास्तेन वयं भगवन्तः स्याम । तं त्वा भग सर्व इज्जोहवीति स नो भग पुरएता भवेह ॥**

*(ऋ. ७-४२-५)*

उदुत्यं प्रस्कण्वः काण्वः सूर्यो गायत्री ।

उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥
(ऋ. १-५०-१)

**विशाखा-** (इन्द्राग्नी विश्वामित्र इन्द्राग्नी गायत्री ।

इन्द्राग्नी आ गतं सुतं गीर्भिर्नभो वरेण्यम् । अस्य पातं धियेषिता ॥
(ऋ. ३-१२-१)

तव वायवृतस्पते ... । *(नवग्रहप्रकरणे) [81 पुटे]*

मित्रो जनान्यातयति ... । *(सन्ध्यावन्दनप्रकरणे) [2 पुटे]*

**उत्तराषाढा-** विश्वे देवासो गृत्समदः शौनको भार्गवो विश्वेदेवा गायत्री ।

विश्वे देवास आ गत शृणुता म इमं हवम् । एदं बर्हिर्नि षीदत ॥
(ऋ. २-४१-१३)

यत् किं चेदं मैत्रावरुणिर्वसिष्ठो वरुणो गायत्री ।

यत् किं चेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्या३श्चरामसि ।
अचित्ती यत्तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषः ॥
(ऋ. ७-८९-५)

इदं विष्णुः ... । *(पञ्चगव्यप्रकरणे) [20 पुटे]*

**पूर्वाभाद्रा-** समद्रः सिन्धुः वसुकर्णो वासुकोऽजैकपात् (विश्वेदेवाः) जगती ।

समुद्रः सिन्धू रजो अन्तरिक्षमज एकपात् तनयित्नुरर्णवः ।
अहिर्बुध्न्यः शृणवद्वचांसि मे विश्वे देवास उत सूरयो मम ॥
(ऋ. १०-६६-११)

**इमं मे वरुण ...** । *(सन्ध्यावन्दनप्रकरणे) [3 पुटे]*

**अभि ये मिथो ...** । *(धनिष्ठापञ्चकमन्त्रप्रकरणे) [166 पुटे]*

## वृषोत्सर्गमन्त्राः

**कद्रुद्राय ...** । *(नवग्रहप्रकरणे) [75 पुटे]*

**सोमो धेनुं ...** । *(नवग्रहप्रकरणे) [81 पुटे]*

**इन्द्रं वो विश्वतस्परि ...** । *(नवग्रहप्रकरणे) [78 पुटे]*

**आपो हिष्ठेत्यादिऋक्त्रयम्** । *(सन्ध्यावन्दनप्रकरणे) [1 पुटे]*

**कयानश्चित्र इत्यादि ऋक्त्रयम्** । *(अन्नसूक्तेषु) [144 पुटे)*

**ऋषभं मेति पञ्चर्चं सूक्तम्** । *(लक्ष्मीसूक्तेषु सपत्नघ्नसूक्तम्) [135 पुटे]*

कद्रुद्रायेति नवर्चस्य सूक्तस्य घौरः कण्वो रुद्रः, तृतीयाया मित्रावरुणौ च, सप्तम्यादितृचस्य सोमो, गायत्री अन्त्यानुष्टुप् ।

**कद्रुद्राय प्रचेतसे मीह्लुष्टमाय तव्यसे । वोचेम शन्तमं हृदे ॥ १ ॥ यथा नो अदितिः करत्पश्वे नृभ्यो यथा गवे । यथा तोकाय रुद्रियम् ॥ २ ॥ यथा नो मित्रो वरुणो यथा रुद्रश्चिकेतति । यथा विश्वे सजोषसः ॥ ३ ॥ गाथपतिं मेधपतिं रुद्रं जलाषभेषजम् । तच्छंयोः सुम्नमीमहे ॥ ४ ॥ यः शुक्र इव सूर्यो हिरण्यमिव रोचते । श्रेष्ठो देवानां वसुः ॥ ५ ॥ शं नः करत्यर्वते सुगं मेषाय मेष्ये । नृभ्यो नारिभ्यो गवे ॥ ६ ॥ अस्मे सोम श्रियमधि नि धेहि शतस्य नृणाम् । महि**

श्रवस्तुविनृम्णम् ।। ७ ।। मा नः सोमपरिबाधो मारातयो जुहुरन्त ।
आ न इन्दो वाजे भज ।। ८ ।। यास्ते प्रजा अमृतस्य परस्मिन्
धामन्नृतस्य । मूर्धा नाभा सोम वेन आभूषन्तीः सोम वेदः
।। ९ ।। (ऋ. १/४३)

इमा रुद्रायेत्येकादशर्चस्य कुत्स आङ्गिरसो रुद्रो जगती दशम्येकादश्योस्त्रिष्टुप् ।

इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्र भरामहे मतीः । यथा
शमसद् द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ।। १ ।।
मृळा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते ।
यच्छं च योश्च मनुरायेजे पिता तदश्याम तव रुद्र प्रणीतिषु
।। २ ।। अश्याम ते सुमतिं देवयज्यया क्षयद्वीरस्य तव रुद्र
मीढ्वः । सुम्नायन्निद्विशो अस्माकमा चरारिष्टवीरा जुहवाम ते
हविः ।। ३ ।। त्वेषं वयं रुद्रं यज्ञसाधं वंकुं कविमवसे नि
ह्वयामहे । आरे अस्मद्दैव्यं हेळो अस्यतु सुमतिमिद्वयमस्या
वृणीमहे ।। ४ ।। दिवो वराहमरुषं कपर्दिनं त्वेषं रूपं नमसा
नि ह्वयामहे । हस्ते बिभ्रद्भेषजा वार्याणि शर्म वर्म च्छर्दिरस्मभ्यं
यंसत् ।। ५ ।। इदं पित्रे मरुतामुच्यते वचः स्वादोः स्वादीयो
रुद्राय वर्धनम् । रास्वा च नो अमृत मर्तभोजनं त्मने तोकाय
तनयाय मृळ ।। ६ ।। मा नो महान्तमुत मा नो अर्भकं मा

न उक्षन्तमुत मा न उक्षितम् । मा नो वधीः पितरं मोत मातरं मा नः प्रियास्तन्वो रुद्र रीरिषः ।। ७ ।। मा नस्तोके तनये मा न आयौ मा नो गोषु मा नो अश्वेषु रीरिषः । वीरान्मा नो रुद्रभामितो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ।। ८ ।। उप ते स्तोमान्पशुपा इवाकरं रास्वा पितर्मरुतां सुम्नमस्मे । भद्रा हि ते सुमतिर्मृळयत्तमाथा वयमव इत्ते वृणीमहे ।। ९ ।। आरे ते गोघ्नमुत पूरुषघ्नं क्षयद्वीर सुम्नमस्मे ते अस्तु । मृळा च नो अधि च ब्रूहि देवाधा च नः शर्म यच्छ द्विबर्हाः ।। १० ।। अवोचाम नमो अस्मा अवस्यवः शृणोतु नो हवं रुद्रो मरुत्वान् । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ।। ११ ।। *(ऋ. १/११४)*

आ ते पितरिति पञ्चदशर्चस्य गृत्समदो भार्गवः शौनको रुद्रस्त्रिष्टुप् ।

आ ते पितर्मरुतां सुम्नमेतु मा नः सूर्यस्य सन्दृशो युयोथाः । अभि नो वीरो अर्वति क्षमेत प्र जायेमहि रुद्र प्रजाभिः ।। १ ।। त्वादत्तेभी रुद्र शन्तमेभिः शतं हिमा अशीय भेषजेभिः । व्य१स्मद्द्वेषो वितरं व्यंहो व्यमीवाश्चातयस्वा विषूचीः ।। २ ।। श्रेष्ठो जातस्य रुद्र श्रियासि तवस्तमस्तवसां वज्रबाहो । पर्षिणः पारमंहसः स्वस्ति विश्वा अभीती रपसो युयोधि ।। ३ ।। मा त्वा रुद्र चुक्रुधामा नमोभिर्मा दुष्टुती वृषभ मा सहूती । उन्नो

वीराँ अर्पय भेषजेभिर्भिषक्तमं त्वा भिषजां शृणोमि ॥ ४ ॥
हवीमभिर्हवते यो हविर्भिरव स्तोमेभी रुद्रं दिषीय । ऋदूदरः
सुहवो मा नो अस्यै बभ्रुः सुशिप्रो रीरधन्मनायै ॥ ५ ॥ उन्मा
ममन्द वृषभो मरुत्वान् त्वक्षीयसा वयसा नाधमानम् । घृणीव
च्छायामरपा अशीयाऽऽविवासेयं रुद्रस्य सुम्नम् ॥ ६ ॥ क१स्य
ते रुद्र मृळयाकुर्हस्तो यो अस्ति भेषजो जलाषः । अपभर्ता
रपसो दैव्यस्याभी नु मा वृषभ चक्षमीथाः ॥ ७ ॥ प्र बभ्रवे
वृषभाय श्वितीचे महो महीं सुष्टुतिमीरयामि । नमस्या
कल्मलीकिनं नमोभिर्गृणीमसि त्वेषं रुद्रस्य नाम ॥ ८ ॥
स्थिरेभिरङ्गैः पुरुरूप उग्रो बभ्रुः शुक्रेभिः पिपिशे हिरण्यैः ।
ईशानादस्य भुवनस्य भूरेर्न वा उ योषद्रुद्रादसुर्यम् ॥ ९ ॥
अर्हन् बिभर्षि सायकानि धन्वार्हन् निष्कं यजतं विश्वरूपम् ।
अर्हन्निदं दयसे विश्वमभ्वं न वा ओजीयो रुद्र त्वदस्ति ॥ १० ॥
स्तुहि श्रुतं गर्तसदं युवानं मृगं न भीममुपहत्नुमुग्रम् । मृळा
जरित्रे रुद्र स्तवानोऽन्यं ते अस्मन्नि वपन्तु सेनाः ॥ ११ ॥
कुमारश्चित्पितरं वन्दमानं प्रति नानाम रुद्रोपयन्तम् । भूरेर्दातारं
सत्पतिं गृणीषे स्तुतस्त्वं भेषजा रास्यस्मे ॥ १२ ॥ या वो
भेषजा मरुतः शुचीनि या शन्तमा वृषणो या मयोभु । यानि
मनुरवृणीता पिता नस्ता शं च योश्च रुद्रस्य वश्मि ॥ १३ ॥

परि णो हेती रुद्रस्य वृज्याः परि त्वेषस्य दुर्मतिर्मही गात् ।
अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृळ
॥ १४ ॥ एवा बभ्रो वृषभ चेकितान यथा देव न हृणीषे न
हंसि । हवनश्रुन्नो रुद्रेह बोधि बृहद्वदेम विदथे सुवीराः
॥ १५ ॥ (ऋ. २/३३)

इमा रुद्रायेति चतसृणां मैत्रावरुणिर्वसिष्ठो रुद्रो जगती अन्त्या त्रिष्टुप् ।

इमा रुद्राय स्थिरधन्वने गिरः क्षिप्रेषवे देवाय स्वधाव्ने ।
अषाह्ळाय सहमानाय वेधसे तिग्मायुधाय भरता शृणोतु नः
॥ १ ॥ स हि क्षयेण क्षम्यस्य जन्मनः साम्राज्येन दिव्यस्य
चेतति । अवन्नवन्तीरुप नो दुरश्चरानमीवो रुद्र जासु नो भव
॥ २ ॥ या ते दिद्युदवसृष्टा दिवस्परि क्ष्मया चरति परि सा
वृणक्तुः नः । सहस्रं ते स्वपिवात भेषजा मानस्तोकेषु तनयेषु
रीरिषः ॥ ३ ॥ मा नो वधी रुद्र मा परा दा मा ते भूम
प्रसितौ हीळितस्य । आ नो भज बर्हिषि जीवशंसे यूयं पात
स्वस्तिभिः सदा नः ॥ ४ ॥ (ऋ. ७-४६)

## महैकोद्दिष्टमन्त्राः

उदीरतामित्यष्टर्चस्य शङ्खो यामायनः पितरस्त्रिष्टुप् ।

उदीरतामवर उत् परास उन्मध्यमाः पितरः सोम्यासः । असुं
य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥ १ ॥ इदं

पितृभ्यो नमो अस्त्वद्य ये पूर्वासो य उपरासः ईयुः । ये पार्थिवे रजस्या निषत्ता ये वा नूनं सुवृजनासु विक्षु ॥ २ ॥ आहं पितॄन् त्सुविदत्राँ अवित्सि नपातं च विक्रमणं च विष्णोः । बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहागमिष्ठाः ॥ ३ ॥ बर्हिषदः पितर ऊत्य१र्वागिमा वो हव्या चकृमा जुषध्वम् । त आ गतावसा शन्तमेनाऽथा नः शं योररपो दधात ॥ ४ ॥ उपहूताः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु । त आ गमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु तेऽवन्त्वस्मान् ॥ ५ ॥ आच्या जानु दक्षिणतो निषद्येमं यज्ञमभि गृणीत विश्वे । मा हिंसिष्ट पितरः केन चिन्नो यद्व आगः पुरुषता कराम ॥ ६ ॥ आसीनासो अरुणीनामुपस्थे रयिं धत्त दाशुषे मर्त्याय । पुत्रेभ्यः पितरस्तस्य वस्वः प्र यच्छत त इहोर्जं दधात ॥ ७ ॥ ये नः पूर्वे पितरः सोम्यासोऽनूहिरे सोमपीथं वसिष्ठाः । तेभिर्यमः संरराणो हवींष्युशन्नुशद्भिः प्रतिकाममत्तु ॥ ८ ॥

(ऋ. १०/१५/१-८)

## सपिण्डीकरणमन्त्राः

ये समानाः समनसः पितरो यमराज्ये । तेषां लोकः स्वधा नमो यज्ञो यज्ञेषु कल्पताम् ॥ ये सजाताः समनसो जीवा

जीवेषु मामकाः । तेषां श्रीर्मयि कल्पतामस्मिँल्लोके शतं समाः ॥

सं गच्छध्वमिति तृचस्य संवनन आङ्गिरस सञ्ज्ञानमनुष्टुप् द्वितीया त्रिष्टुप् ।

सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम् । देवा भागं यथा पूर्वे सञ्जानाना उपासते ॥ १ ॥ समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम् । समानं मन्त्रमभि मन्त्रये वः समानेन वो हविषा जुहोमि ॥ २ ॥ समानी व आकूतिः समाना हृदयानि वः । समानमस्तु वो मनो यथा वः सुसहासति ॥ ३ ॥ *(ऋ. १०/१९१/२-४)*

मधुमतीरिति वामदेवो गौतमः क्षेत्रपतिस्त्रिष्टुप् ।

मधुमतीरोषधीर्द्याव आपो मधुमान्नो भवत्वन्तरिक्षम् । क्षेत्रस्य पतिर्मधुमान्नो अस्त्वरिष्यन्तो अन्वेनं चरेम ॥ *(ऋ. ४/५७/३)*

चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि । तेन पवित्रेण शुद्धेन पूता अति पाप्मानमरातिं तरेम ॥

*(तै. उप. ४-१०)*

यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति तस्माद्ब्राह्मणेभ्यो वेदविद्भ्यो दिवे दिवे नमस्कुर्यान्नाश्लीलं कीर्तयेदेता एव देवताः प्रीणाति ॥

## त्रयोदशीदिनविधिमन्त्राः

आनो भद्रा इत्यादिपञ्चर्चस्य गोतमो राहूगणो विश्वे देवा जगती ।

आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः । देवा नो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवेदिवे ॥ १ ॥ देवानां भद्रा सुमतिर्ऋजूयतां देवानां रातिरभि नो नि वर्तताम् । देवानां सख्यमुप सेदिमा वयं देवा न आयुः प्र तिरन्तु जीवसे ॥ २ ॥ तान् पूर्वया निविदा हूमहे वयं भगं मित्रमदितिं दक्षमस्रिधम् । अर्यमणं वरुणं सोममश्विना सरस्वतीः नः सुभगा मयस्करत् ॥ ३ ॥ तन्नो वातो मयोभु वातु भेषजं तन्माता पृथिवी तत् पिता द्यौः । तद्ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृणुतं धिष्ण्या युवम् । तमीशानं जगतस्तस्थुषस्पतिं धियञ्जिन्वमवसे हूमहे वयम् । पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये ॥ ५ ॥

स्वस्तिसूक्तम् । *[38-39 पुटयोः]*

शन्नः सुक्तम् परिशिष्टसहितम् । *[101-103 पुटेषु]*

आशुः शिशान इति त्रयोदशर्चं सूक्तम्, परिशिष्टश्च ।
*(ऐन्द्रसूक्तम्- 107-108 पुटयोः)*

मुञ्चामि त्वा ... । *लक्ष्मीसूक्तेषु ९ यक्ष्मनाशनसूक्तम्) [137 पुटे]*

त्यमूषु वाजिनं ... । *(लक्ष्मीसुक्तेषु ११ महीसूक्तम्) [138 पुटे]*

ईळे द्यावेति पञ्चविंशत्यृचस्य सुक्तस्य कुत्स आङ्गिरसः, प्रथमाया आद्यपादस्य द्यावापृथिव्यौ द्वितीयपादस्याग्निः, उत्तरार्धस्य अश्विनौ, शिष्टानामश्विनौ, जगती अन्त्ययोर्द्वयोस्त्रिष्टुप्।

ईळे द्यावापृथिवी पूर्वचित्तयेऽग्निं घर्मं सुरुचं यामन्निष्टये । याभिर्भरे कारमंशाय जिन्वथस्ताभिरूषु ऊतिभिरश्विना गतम् ॥ १ ॥ युवोर्दानाय सुभरा असश्चतो रथमा तस्थुर्वचसं न मन्तवे । याभिर्धियोऽवथः कर्मन्निष्टये ताभिरूषु ऊतिभिरश्विना गतम् ॥ २ ॥ युवं तासां दिव्यस्य प्रशासने विशां क्षययो अमृतस्य मज्मना । याभिर्धेनुमस्वं१ पिन्वथो नरा ताभिरूषु ऊतिभि- रश्विना गतम् ॥ ३ ॥ याभिः परिज्मा तनयस्य मज्मना द्विमाता तूर्षु तरणिर्विभूषति । याभिस्त्रिमन्तुरभवद् विचक्षणस्ताभिरूषु ऊतिभिरश्विना गतम् ॥ ४ ॥ याभी रेभं निवृतं सितमद्भ्य उद्वन्दनमैरयतं स्वर्दृशे । याभिः कण्वं प्र सिषासन्तमावतं ताभिरूषु ऊतिभिरश्विना गतम् ॥ ५ ॥ याभिरन्तकं जसमानमा- रणे भुज्युं याभिरव्यथिभिर्जिजिन्वथुः । याभिः कर्कन्धुं वय्यं च जिन्वथस्ताभिरूषु ऊतिभिरश्विना गतम् ॥ ६ ॥ याभिः शुचन्तिं धनसां सुषंसदं तप्तं घर्ममोम्यावन्त- मत्रये । याभिः पृश्निगुं पुरुकुत्समावतं ताभिरूषु ऊतिभिरश्विना गतम् ॥ ७ ॥ याभिः शचीभिर्वृषणा परावृजं प्रान्धं श्रोणं चक्षस

एतवे कृथः । याभिर्वर्तिकां ग्रसितामममुञ्चतं ताभिरूषु ऊतिभिरश्विना गतम् ॥ ८ ॥ याभिः सिन्धुं मधुमन्तमसश्चतं वसिष्ठं याभिरजराव- जिन्वतम् । याभिः कुत्सं श्रुतर्यं नर्यमावतं ताभिरूषु ऊतिभिरश्विना गतम् ॥ ९ ॥ याभिर्विश्पलां धनसामथर्व्यं सहस्रमीह्ळ आजावजिन्वतम् । याभिर्वशमश्व्यं प्रेणिमावतं ताभिरूषु ऊतिभिरश्विना गतम् ॥ १० ॥ याभिः सुदानू औशिजाय वणिजे दीर्घश्रवसे मधुकोशो अक्षरत् । कक्षीवन्तं स्तोतारं याभिरावतं ताभिरूषु ऊतिभिरश्विना गतम् ॥ ११ ॥ याभी रसां क्षोदसोद्नः पिपिन्वथुरनश्वं याभी रथमावतं जिषे । याभिस्त्रिशोक उस्रिया उदाजतं ताभिरूषु ऊतिभिरश्विना गतम् ॥ १२ ॥ याभिः सूर्यं परियाथः परावति मन्धातारं क्षेत्रपत्येष्वावतम् । याभिर्विप्रं प्र भरद्वाजमावतं ताभिरूषु ऊतिभिरश्विना गतम् ॥ १३ ॥ याभिर्महामतिथिग्वं कशोजुवं दिवोदासं शम्बरहत्य आवतम् । याभिः पूर्भिद्ये त्रसदस्युमावतं ताभिरूषु ऊतिभिरश्विना गतम् ॥ १४ ॥ याभिर्वम्रं विपिपान- मुपस्तुतं कलिं याभिर्वित्तजानिं दुवस्यथः । याभिर्व्यश्वमुत पृथिमावतं ताभिरूषु ऊतिभिरश्विना गतम् ॥ १५ ॥ याभिर्नरा शयवे याभिरत्रये याभिः पुरा मनवे गातुमीषथुः । याभिः शारीराजतं स्यूमरश्मये ताभिरूषु ऊतिभिरश्विना गतम्

।। १६ ।। याभिः पठर्वा जठरस्य मज्मनाग्निर्नादीदेच्चित इद्धो अज्मन्ना । याभिः शर्यातमवथो महाधने ताभिरूषु ऊतिभिरश्विना गतम् ।। १७ ।। याभिरङ्गिरो मनसा निरण्यथोऽग्रं गच्छथो विवरे गोअर्णसः । याभिर्मनुं शूरमिषा समावतं ताभिरूषु ऊतिभिरश्विना गतम् ।। १८ ।। याभिः पत्नीर्विमदाय न्यूहथुरा घ वा याभिररुणीरशिक्षतम् । याभिः सुदास ऊहथुः सुदेव्यं१ ताभिरूषु ऊतिभिरश्विना गतम् ।। १९ ।। याभिः शन्ताती भवथो ददाशुषे भुज्युं याभिरवथो याभिरध्रिगुम् । ओम्यावतीं सुभरामृतस्तुभं ताभिरूषु ऊतिभिरश्विना गतम् ।। २० ।। याभिः कृशानुमसने दुवस्यथो जवे याभिर्यूनो अर्वन्तमावतम् । मधुप्रियं भरथो यत्सरड्भ्य- स्ताभिरूषु ऊतिभिरश्विना गतम् ।। २१ ।। याभिर्नरं गोषुयुधं नृषाह्ये क्षेत्रस्य साता तनयस्य जिन्वथः । याभी रथाँ अवथो याभिरर्वतस्ताभिरूषु ऊतिभिरश्विना गतम् ।। २२ ।। याभिः कुत्समार्जुनेयं शतक्रतू प्र तुर्वीतिं प्र च दभीतिमावतम् । याभिर्ध्वसन्तिं पुरुषन्तिमावतं ताभिरूषु ऊतिभिरश्विना गतम् ।। २३ ।। अप्रस्वतीमश्विना वाचमस्मे कृतं नो दस्रा वृषणा मनीषाम् । अद्यूत्येऽवसे नि ह्वये वां वृधे च नो भवतं वाजसातौ ।। २४ ।। द्युभिरक्तुभिः परि पातमस्मानरिष्टेभिरश्विना

**सौभगेभिः । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ २५ ॥** *(ऋ. १/११२)*

निवर्तध्वमित्यष्टर्चस्य मथितो यामायनः आप उत्तरार्धर्चस्य अग्नीषोमौ अनुष्टुप् षष्ठी गायत्री ।

**नि वर्तध्वं मानु गातास्मान् त्सिषक्त रेवतीः । अग्नीषोमा पुनर्वसू अस्मे धारयतं रयिम् ॥ १ ॥ पुनरेना नि वर्तय पुनरेना न्या कुरु । इन्द्र एणा नि यच्छत्वग्निरेना उपाजतु ॥ २ ॥ पुनरेता नि वर्तन्तामस्मिन् पुष्यन्तु गोपतौ । इहैवाग्ने नि धारयेह तिष्ठतु या रयिः ॥ ३ ॥ यन्नियानं न्ययनं सञ्ज्ञानं यत्परायणम् । आवर्तनं निवर्तनं यो गोपा अपि तं हुवे ॥ ४ ॥ य उदानड्व्ययनं य उदानट्परायणम् । आवर्तनं निवर्तनमपि गोपा नि वर्तताम् ॥ ५ ॥ आ निवर्त नि वर्तय पुनर्न इन्द्र गा देहि । जीवाभिर्भुनजामहै ॥ ६ ॥ परि वो विश्वतो दध ऊर्जा घृतेन पयसा । ये देवाः के च यज्ञियास्ते रय्या सं सृजन्तु नः ॥ ७ ॥ आ निवर्तन वर्तय नि निवर्तन वर्तय । भूम्याश्चतस्रः प्रदिशस्ताभ्य एना नि वर्तय ॥ ८ ॥** *(ऋ. १०-१९)*

भद्रं न इति पादमन्त्रस्य ऐन्द्रो विमदोऽग्निरेकपदा विराट् ।

**भद्रं नो अपि वातय मनः ॥** *(ऋ. १०-२०-१)*

शान्ता पृथिवी शिवमन्तरिक्षं द्यौर्नो देव्यभयं नो अस्तु । शिवा दिशः प्रदिश उद्दिशो न आपो विद्युतः परि पान्तु सर्वतः शान्तिः शान्तिः शान्तिः ॥

## मन्युसूक्तम्

यस्ते मन्यविति सप्तर्चस्य सूक्तस्य मन्युस्तापसो मन्युस्त्रिष्टुबाद्या जगती ।

यस्ते मन्योऽविधद्वज्र सायक सह ओजः पुष्यति विश्वमानुषक् । साह्याम दासमार्यं त्वया युजा सहस्कृतेन सहसा सहस्वता ॥ १ ॥ मन्युरिन्द्रो मन्युरेवास देवो मन्युर्होता वरुणो जातवेदाः । मन्युं विश ईळते मानुषीर्याः पाहि नो मन्यो तपसा सजोषाः ॥ २ ॥ अभीहि मन्यो तवसस्तवीयान् तपसा युजा वि जहि शत्रून् । अमित्रहा वृत्रहा दस्युहा च विश्वा वसून्या भरा त्वं नः ॥ ३ ॥ त्वं हि मन्यो अभिभूत्योजाः स्वयम्भूर्भामो अभिमातिषाहः । विश्वचर्षणिः सहुरिः सहावानस्मास्वोजः पृतनासु धेहि ॥ ४ ॥ अभागः सन्नप परेतो अस्मि तव क्रत्वा तविषस्य प्रचेतः । तं त्वा मन्यो अक्रतुर्जिहीळाहं स्वा तनूर्बलदेयाय मेहि ॥ ५ ॥ अयं ते अस्म्युप मेह्यर्वाङ् प्रतीचीनः सहुरे विश्वधायः । मन्यो वज्रिन्नभि मामा ववृत्स्व हनाव दस्यूँरुत बोध्यापेः ॥ ६ ॥ अभि प्रेहि दक्षिणतो भवा मेऽधा

वृत्राणि जङ्घनाव भूरि । जुहोमि ते धरुणं मध्वो अग्रमुभा उपांशु प्रथमा पिबाव ॥ ७ ॥ (ऋ. १०-८३)

त्वया मन्यो इति सप्तर्चस्य सूक्तस्य मन्युस्तापसो मर्न्युजगती, आद्यास्तिस्त्रस्त्रिष्टुभः ।

त्वया मन्यो सरथमारुजन्तो हर्षमाणासो धृषिता मरुत्वः । तिग्मेषव आयुधा संशिशाना अभि प्र यन्तु नरो अग्निरूपाः ॥ १ ॥ अग्निरिव मन्यो त्विषितः सहस्व सेनानीर्नः सहुरे हूत एधि । हत्वाय शत्रून् विभजस्व वेद ओजो मिमानो वि मृधो नुदस्व ॥ २ ॥ सहस्व मन्यो अभिमातिमस्मे रुजन् मृणन् प्रमृणन् प्रेहि शत्रून् । उग्रं ते पाजो नन्वा रुरुध्रे वशी वशं नयस एकज त्वम् ॥ ३ ॥ एको बहूनामसि मन्यवीळितो विशंविशं युधये सं शिशाधि । अकृत्तरुक्त्वया युजा वयं द्युमन्तं घोषं विजयाय कृण्महे ॥ ४ ॥ विजेषकृदिन्द्र इवानवब्रवो३ऽस्माकं मन्यो अधिपा भवेह । प्रियं ते नाम सहुरे गृणीमसि विद्मा तमुत्सं यत आबभूथ ॥ ५ ॥ आभूत्या सहजा वज्र सायक सहो बिभर्ष्यभिभूत उत्तरम् । क्रत्वा नो मन्यो सह मेद्येधि महाधनस्य पुरुहूत संसृजि ॥ ६ ॥ संसृष्टं धनमुभयं समाकृतमस्मभ्यं दत्तां वरुणश्च मन्युः । भियं दधाना हृदयेषु शत्रवः पराजितासो अप नि लयन्ताम् ॥ ८ ॥ (ऋ. १०-८४)

## गार्त्समदं विष्णुसूक्तम्

यो जात इति पञ्चदशर्चस्य सूक्तस्य गृत्समदो भार्गवः शौनक इन्द्रस्त्रिष्टुप् ।

यो जात एव प्रथमो मनस्वान् देवो देवान् क्रतुना पर्यभूषत् । यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्रः ॥ १ ॥ यः पृथिवीं व्यथमानामदृंहद्यः पर्वतान् प्रकुपिताँ अरम्णात् । यो अन्तरिक्षं विममे वरीयो यो द्यामस्तभ्नात् स जनास इन्द्रः ॥ २ ॥ यो हत्वाहिमरिणात् सप्त सिन्धून् यो गा उदाजदपधा वलस्य । यो अश्मनोरन्तरग्निं जजान संवृक् समत्सु स जनास इन्द्रः ॥ ३ ॥ येनेमा विश्वा च्यवना कृतानि यो दासं वर्णमधरं गुहाकः । श्वघ्नीव यो जिगीवाँ लक्षमाददर्यः पुष्टानि स जनास इन्द्रः ॥ ४ ॥ यं स्मा पृच्छन्ति कुह सेति घोरमुतेमाहुर्नैषो अस्तीत्येनम् । सो अर्यः पुष्टीर्विज इवा मिनाति श्रदस्मै धत्त स जनास इन्द्रः ॥ ५ ॥ यो रध्रस्य चोदिता यः कृशस्य यो ब्रह्मणो नाधमानस्य कीरेः । युक्तग्राव्णो योऽविता सुशिप्रः सुतसोमस्य स जनास इन्द्रः ॥ ६ ॥ यस्याश्वासः प्रदिशि यस्य गावो यस्य ग्रामा यस्य विश्वे रथासः । यः सूर्यं य उषसं जजान यो अपां नेता स जनास इन्द्रः ॥ ७ ॥ यं क्रन्दसी संयती विह्वयेते परेऽवर उभया अमित्राः । समानं चिद्

रथमातस्थिवांसा नाना हवेते स जनास इन्द्रः ॥ ८ ॥ यस्मान्न ऋते विजयन्ते जनासो यं युध्यमाना अवसे हवन्ते । यो विश्वस्य प्रतिमानं बभूव यो अच्युतच्युत्स जनास इन्द्रः ॥ ९ ॥ यः शश्वतो मह्येनो दधानानमन्यमानाञ्छर्वा जघान । यः शर्धते नानुददाति शृध्यां यो दस्योर्हन्ता स जनास इन्द्रः ॥ १० ॥ यः शम्बरं पर्वतेषु क्षियन्तं चत्वारिंश्यां शरद्यन्वविन्दत् । ओजायमानं यो अहिं जघान दानुं शयानं स जनास इन्द्रः ॥ ११ ॥ यः सप्तरश्मिर्वृषभस्तुविष्मानवासृजत् सर्तवे सप्त सिन्धून् । यो रौहिणमस्फुरद्वज्रबाहुर्द्यामारोहन्तं स जनास इन्द्रः ॥ १२ ॥ द्यावा चिदस्मै पृथिवी नमेते शुष्माच्चिदस्य पर्वता भयन्ते । यः सोमपा निचितो वज्रबाहुर्यो वज्रहस्तः स जनास इन्द्रः ॥ १३ ॥ यः सुन्वन्तमवति यः पचन्तं यः शंसन्तं यः शशमानमूती । यस्य ब्रह्म वर्धनं यस्य सोमो यस्येदं राधः स जनास इन्द्रः ॥ १४ ॥ यः सुन्वते पचते दुध्र आ चिद्वाजं दर्दर्षि स किलासि सत्यः । वयं त इन्द्र विश्वह प्रियासः सुवीरासो विदथमा वदेम ॥ १५ ॥ *(ऋ. २-१२)*

## वासिष्ठं विष्णुसूक्तम्

परो मात्रयेति सप्तर्चस्य सूक्तस्य मैत्रावरुणिर्वसिष्ठो विष्णुः । चतुर्थी पञ्चमीषष्ठीनामिन्द्राविष्णू । त्रिष्टुप् ।

परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति । उभे ते विद्म रजसी पृथिव्या विष्णो देव त्वं परमस्य वित्से ॥ १ ॥
न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप । उदस्तभ्ना नाकमृष्वं बृहन्तं दाधर्थ प्राचीं ककुभं पृथिव्याः ॥ २ ॥
इरावती धेनुमती हि भूतं सूयवसिनी मनुषे दशस्या । व्यस्तभ्ना रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः ॥ ३ ॥
उरुं यज्ञाय चक्रथुरु लोकं जनयन्ता सूर्यमुषासमग्निम् । दासस्य चिद्वृषशिप्रस्य माया जघ्नथुर्नरा पृतनाज्येषु ॥ ४ ॥
इन्द्राविष्णू दृंहिताः शम्बरस्य नव पुरो नवतिं च श्नथिष्टम् । शतं वर्चिनः सहस्रं च साकं हयो अप्रत्यसुरस्य वीरान् ॥ ५ ॥
इयं मनीषा बृहती बृहन्तोरुक्रमा तवसा वर्धयन्ती । ररे वां स्तोमं विदथेषु विष्णो पिन्वतमिषो वृजनेष्विन्द्र ॥ ६ ॥
वषट् ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् । वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

(ऋ. ७-९९)

## भौवनीयं विष्णुसूक्तम्

य इमा इति सप्तर्चस्य सूक्तस्य विश्वकर्मा भौवनो विश्वकर्मा त्रिष्टुप्। द्वितीया विराड्रूपा।

य इमा विश्वा भुवनानि जुह्वदृषिर्होता न्यसीदत् पिता नः। स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ आ विवेश ॥ १ ॥ किं स्विदासीदधिष्ठानमारम्भणं कतमत् स्वित् कथासीत्। यतो भूमिं जनयन् विश्वकर्मा वि द्यामौर्णोन्महिना विश्वचक्षाः ॥ २ ॥ विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतो-बाहुरुत विश्वतस्पात्। सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन् देव एकः ॥ ३ ॥ किं स्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणो मनसा पृच्छतेदु तद् यदध्यतिष्ठद्भुवनानि धारयन् ॥ ४ ॥ या ते धामानि परमाणि यावमा या मध्यमा विश्वकर्मन्नुतेमा। शिक्षा सखिभ्यो हविषि स्वधावः स्वयं यजस्व तन्वं वृधानः ॥ ५ ॥ विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम्। मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ॥ ६ ॥ वाचस्पतिं विश्वकर्माणमूतये मनोजुवं वाजे अद्या हुवेम। स नो विश्वानि हवनानि जोषद् विश्वशम्भूरवसे साधुकर्मा ॥ ७ ॥

(ऋ. १०.७१)

## हिरण्यगर्भसूक्तम्

हिरण्यगर्भ इति दशर्चस्य सूक्तस्य प्राजापत्यः कः (प्रजापतिः) त्रिष्टुप् ।

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स
दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ १ ॥
य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः ।
यस्य छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥ २ ॥
यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव । य
ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥ ३ ॥
यस्येमे हिमवन्तो महित्वा यस्य समुद्रं रसया सहाहुः । यस्येमाः
प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम ॥ ४ ॥ येन
द्यौरुग्रा पृथिवी च दृळहा येन स्वः स्तभितं येन नाकः । यो
अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ॥ ५ ॥
यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने । यत्राधि
सूर उदितो विभाति कस्मै देवाय हविषा विधेम ॥ ६ ॥ आपो
ह यद्बृहतीर्विश्वमायन् गर्भं दधाना जनयन्तीरग्निम् । ततो देवानां
समवर्ततासुरेकः कस्मै देवाय हविषा विधेम ॥ ७ ॥ यश्चिदापो
महिना पर्यपश्यद् दक्षं दधाना जनयन्तीर्यज्ञम् । यो देवेष्वधि
देव एक आसीत् कस्मै देवाय हविषा विधेम ॥ ८ ॥ मा नो
हिंसीज्जनिता यः पृथिव्या यो वा दिवं सत्यधर्मा जजान ।

यश्चापश्चन्द्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम ॥ ९ ॥
प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव । यत्
कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥ १० ॥
(ऋ. १०-१२१)

॥ इति शम् ॥

* * * * *

For Copies Please Contact :

2. SMS Granthalaya, Car Street, Udupi

Phone : 0820-2526755

3. Bhargavi Fashions, SMSP Complex, Udupi

Phone : 0820-2522524

4. K. Haridasa Upadhyaya, Bhargavi, 76 Badagubettu, Kukkikatte, Udupi

Phone : 0820-2592524